प्रकाशक—

दिवाकर गिरिजाशङ्कर शर्म्मा

सरस्वतीसदन, अलखसागर

बीकानेर ( राजस्थान )

पुस्तक मिलने के स्थान—

(१) दिवाकर गिरिजाशङ्कर शर्म्मा

सरस्वती सदन अलखसागर, बीकानेर

(२) श्री पं० रामेश्वर शर्मा

श्री हरनाम विद्यालय, जौहरीसागर, चूरू

मुद्रक-

भँवरलाल पुरोहित

गोपाल प्रेस, बीकानेर ।

ॐ

## वृन्दावन गुरुकुल कुलपतीनाम् आचार्यवर्याणाम् श्रीद्विजेन्द्रनाथ शास्त्रिमहोदयानाम् सम्मतिः

"कविकर्मकुशलेन प्रदीप्तप्रतिभाशालिना अमुना कविना विविधवृत्त विभूषितेऽस्मिन् काव्ये ते ते विषयाः कयापि श्रवणमधुरया प्रसन्नया सरलया सहृदयग्राहिण्या वाण्या तथा वर्णिता यथा खलु अनायासेनैव काव्यमिदमनुवाचकानां हृदयङ्गमं भवति।

अथचात्र प्रौढः पद्यप्रबन्धः कमनीया कोमला च पदावलिः किमप्यवर्णनीयं वर्णनमाधुर्यं शब्दालङ्कारा अर्थालङ्काराश्च काव्यरसिका-नामास्वादनाय तथोपनिबद्धा येन रचनेयं भासकालिदास बिल्हणप्रभृ-तिमहाकवीनां कृती बलादिव संस्मारयति।

पदे पदेऽत्र प्रसादादिगुणानां शान्तवीरप्रभृतिरसानाञ्च समुचित सन्निवेशेन काव्यमिदं नूनं सकलसाहित्यविद्याधरस्य विद्याधरस्य काव्यकलायां कामपि लोकोत्तरां नैपुणीमाविष्करोति। सुरभारत्याः कापि गरीयसी सपर्या सम्पादिता इति तस्मै वयं हृदयेन भूयांसि धन्यवाद वचांसि वितरन्तो ऽभिवाञ्छन्तश्च तद्यशोऽभिवृद्धिं काव्यकोविदास्तद्रसास्वादनेन प्रमुदितमानसा भवेयु रित्यसकृत् कामयामहे"।

" आचार्यद्विजेन्द्रनाथशास्त्री

कुलपति गुरुकुल वृन्दावन

श्रीः

## आत्म निवेदनम्

मनोविचारान् प्रकटीकरोति स्वभाविकीयं प्रकृतिर्नरस्य
तस्मान्मदीयापि मनःकथेयं निवेद्यते पद्यमयी सुहृद्भ्यः।
गीतं यथा गीतमहो पुराणै स्तथान गातुं विभवो मदीयः
श्रुतानि गीतानि परं कवीनां तान्येव गुञ्जामि मनोविनोदी॥

मान्या महानुभावाः!

प्रथमसर्गस्य प्रारम्भिके निवेदने निवेदितं मया निवेदनीयम्। स्वपकृया तत् समालोच्यं सहृदयैः पाठकप्रवरैः।

काव्येऽस्मिन् रचनासु ममानुजेन विद्यावागीशेन समालोचकदिवाकरेण श्री डा० दशरथशर्म्मणा एम्. ए. डी. लिट् महोदयेन, संशोधनादिषु मान्यै र्महामहोपाध्यायैःश्री परमेश्वरानन्द शास्त्रिभिःविद्वद्वरेण्यैःश्री पं० लक्ष्मीचन्द्रमिश्र महोदयैश्च यथोपकृतं तथेमे महानुभावाः सन्ति सन्ततं धन्यवादार्हाः।

सुरभारतीप्रणयिभिः मान्यवरैः कविप्रवरैःश्री के. एम्. पनिकर महोदयैश्च सदैव प्रोत्साहितोऽहं काव्यनाटकादि लेखनाय इति तेऽपि प्रमोदन्ता मनेन केनचिन्मदीयेन विश्वातमसमु पासकेन संस्कृतसेवाप्रयासेन।

लोके जीवनसर्वस्वं हरनामैव केवलम्
सुधास्रोतांसि यद्ज्ञानात् प्रवर्षन्ति पदेपदे॥

अक्षयनवमी वि०सं० २०१२ — विनीतः—

श्री शारदा मन्दिर-नागरीभण्डार, बीकानेर — विद्याधरः-शास्त्री

# विशिष्टविषयसूची

प्रारम्भिके निवेदने— श्लोकाः पृष्ठे



द्वितीयेसर्गे

ॐ

त्रयोदशेसर्गे— ( ६१ पृष्ठात् ) ब्राह्मणसम्मेलनसभापतिभाषणम् । ब्राह्मणे विहिता लोकसेवा, १-१५ वर्णव्यवस्थावैशिष्ट्यम् १६-२६ ब्राह्मणत्वम्, २६-३२ ब्राह्मणकर्तव्यम् ३३-३६ विश्वकल्याण दृष्टिः ३८-४४

चतुर्दशेसर्गे— (पृष्ठात् ) यज्ञशाला, विदुषां विवादानुरागः १-७ वैदिकी हिंसा हिंसा न भवति ८-११ यज्ञतत्वम् १२-२० हिंसाविरोधः २१-२५ देशकाल परीक्षणम् २६-३० स्वार्थीनरः । जघन्या नरसृष्टिः ३६-३७ मानवमहत्वम् ३८-४०

पञ्चदशेसर्गे— ( ७० पृष्ठादग्रे ) कुम्भपर्वागमनम् १-५ गंगाकर्षणम् स्मरणीया संघयात्रा, विदुषांसमागमः २४-३४ संरक्ष्या स्वसंस्कृतिः ३५-४७ अखिलभारतीय संस्कृत सम्मेलन स्वागत भाषणम् संस्कृते संस्कृतिः शुद्धा ४८-५१ वर्धते वाग्विपर्ययः ५२-५६ विकृतिः स्याद् विघातिनी ५८-६३ न निन्द्या बालबुद्धयः ६४-७५ सर्वे संस्कृत बुद्धयः साभाषासुरभारती, मान्यश्चेन्मान्यमेत्रतत्, नवः सर्गः प्रवर्त्यताम् ५५-६६ अमरभारती ६७-१०० ।

षोड़शेसर्गे— ( पृष्ठादग्रे ) आत्यन्तिकी शान्तिः १-६ सुधीभिः प्रवर्तिता परम्परा ७-१२ देवीप्रसादः १३-२२ विभिन्नाः स्मरणीया विद्वांसः २३-६० ख्यातिः, संस्कृतिः,प्रकृतिः कृत्रिमायते, लोकवृत्तिः, अनुपमा संस्कृतिः परोपकारः ६१-७२ सत्संकृति जगति दिव्यतु भारतीया ७३-७४

ॐ नमः शिवाय, ।

भाष्याचार्याः श्री पं० हरनामदत्त शास्त्रिणः

जन्मसम्वत् १९०० प्रयाणसम्वत् १९७२

श्रीगणेशायनमः

## ❀ संस्कृतजीवने प्रथमः सर्गः ❀

सृजन्त्यजस्रं नवमेव सर्गम्
वर्णैरवर्णश्च विभासयन्ती
एकाप्यनेकेव विवर्तमाना
विराजते कापि परा विभूतिः ॥ १ ॥

### प्रारम्भिकं निवेदनम्

कवि विधाता भवतीह साक्षात् क्षुद्रश्च कश्चिज्जगतीकणोऽहम्
शक्तिर्न सा विश्वविमोहिनी मे काव्यं यथा मञ्जुल मातनोमि ॥ १ ॥
लोके हि सर्वं सुलभं सुयत्नैः सत्काव्यशक्तिः सुलभा न किन्तु
कृपा प्रभोः सा प्रभुणैव कार्या नवैः प्रकाशै रभिभासमाना ॥ २ ॥
आनन्दपूर्णा करुणार्द्रचित्ता शुद्धानुभूति र्निखिलार्थदात्री
स्वयं स्वमत्ता प्रभवेत् कुतश्चित् सा चेतसो गीतिरसा कदाचित् ॥ ३ ॥
सत्यं शिवंरम्यतमञ्च सर्वं कवि र्यया पश्यति सर्वतोऽपि
बुद्धि र्विशाला स्वत एव यस्यां भावैकरूपञ्च मनोऽभियाति ॥ ४ ॥
अनन्तगुह्यार्थविभासकं तत् कुतोऽधिगच्छामि महो-नु दिव्यम्
विकासशीले मनुजस्वभावे बीजप्रवृत्ति र्नहि किन्तु निन्द्या ॥ ५ ॥

यदृच्छया लब्धिकरणैः सुतुष्टा गोवृन्दवासैः परिपूतवासा,
स्वाध्यायसौख्ये नितरां निमग्नाः समर्थ्य सर्वं प्रभवे विशोकाः ॥ २८ ॥
विभिद्य सर्वानपि विश्वभेदान् यैरैक्यदृष्टि र्जगति प्रपुष्टा,
वेदप्रकाशेन विभासमाना कृता सदा यैं र्जगतां त्रयीच ॥ २९ ॥
तेष्वेव विद्वत्सु विभासमानो वुधाग्रगण्यो हरनामदत्तः,
सदा सदाचाररतस्तपस्वी भाष्ये सुविख्यातमति र्मनस्वी ॥ ३० ॥
आसीन्महात्मा महनीयमूर्तिः काचिद् विभूति र्जनजीवनस्य,
दिव्यावतारः सुकृतस्य साक्षात् शास्त्रेषु नित्यं धृतधर्मवुद्धिः ॥ ३१ ॥
गतिं समाश्रित्य वुधस्य यस्य प्रबोधिनीं धर्ममते रदम्याम्;
निरूप्यते संस्कृतजीवनेऽस्मिन् पुण्याः कथा संस्कृतसंस्कृतानाम् ॥ ३२ ॥
गुरु र्गरीयान् स पितामहो नः विद्वद्वरै रर्चित पादपद्मः
कृत्यानि संस्मृत्य शुभानि यस्य स्वयं सुवुद्धि र्भजते विकासम् ॥ ३३ ॥
नेयं प्रशंसा हि कुलस्य काचित् सत्यप्रकाशाय निमित्तमेतत्,
शिष्यै र्यथाशक्ति सदैव सर्वै र्गेयं हि नित्यं गुरुगौरवञ्च ॥ ३४ ॥
गृहे गृहे सर्वजनै र्गुरूणां गेया गुणाः सद्गुणवर्धनाय,
गुरून् सदेवार्यकुलप्रसूता देवस्वरूपान् गणयन्ति नित्यम् ॥ ३५ ॥
रक्षयञ्च किं ते र्मनुजैः कृतघ्नै रुपेक्षिता ये गुरवोऽपि मान्याः
कुलेषु सर्वेषु भवन्तु पूज्याः सर्वश्च सर्वस्तवनं करोतु ॥ ३६ ॥
विलक्षणैव प्रतिभाति शक्तिः का नाम लोके च जने जने न
सांख्येषु सर्वे पुरुषाः स्वतन्त्रा विकारशून्याश्च भवन्ति नित्यम् ॥ ३७ ॥
उदारचित्ताः समवुद्धिधीरा सदा सदाचाररताः प्रशान्ताः
कथं वुधास्ते नच वर्णनीया आलोकिता यै र्जगती समस्ता ॥ ३८ ॥

सर्वेऽपि सज्जीवनसाध्यसिद्ध्यै सिद्धानमून् शुद्धधिया प्रयान्तु
विहाय मार्गं सरलं वृथैव च्युताश्च सन्तो न भवन्तु वक्रे ॥ ३६ ॥
एषां सतां संस्कृतसंस्कृतानां स्थितिः स्थिरा संस्कृतजीवनेऽस्मिन्
सनातनीयं सरणिः सुसेव्या लक्ष्याधिगत्यै नियता प्रकृत्या ॥ ४० ॥
हरनामामृतं चास्मिन् पूर्वं विज्ञै निपीयताम्
गीयन्ताञ्च ततो गाथाः सर्वेषां सुधियां शुभाः ॥ ४१ ॥
साहित्यं सुरभारतीपरिणतं विश्वात्मसन्तर्पणम्
ब्रह्मास्वादसहोदरं विधिसुतावीणाक्षरं भावुका !
वेदेष्वेव विभासितं भगवता पूर्णं हि पूर्णेषु यत
किं कश्चित् कवतां नवं परमहो रुद्धा न वाचां गतिः ॥ ४२ ॥
श्रेयस्यै जगदीश्वरी विजयते मत्यै शुभा शारदा
काव्या लोचनतत्परः सुकविता-स्रष्टा च मे सोदरः !
विद्वान् भारतसंस्कृते दशरथः ख्यातो वुधानां व्रजे
लोकोऽयञ्च सदा नवानुभवदः किञ्चित्ततः कल्प्यते ॥ ४३ ॥

—-:०:-—

## संस्कृतजीवने द्वितीयः सर्गः

### [ हरनामामृतम् ]

निसर्गरम्या भुवनान्तराले धात्रा धरित्री रचिताऽद्वितीया
विश्वम्भरा सर्वसमृद्धिपूर्णा तस्यां च सद्भारतमद्वितीयम् ॥ १ ॥
यस्मिन् प्रदेशो भुवनप्रसिद्धो ब्रह्मर्षिदेशोऽखिलदेशभासी
सारस्वतो यत्र सदाप्रवाहो दृषद्वती यं सरसं विधत्ते ॥ २ ॥
यत्र स्थितानां च महीसुराणाम् आदर्शभूतो व्यवहारजातः
मनुस्मृतौ सर्वमनुष्यजाते श्चारित्र्यशिक्षा गुरुणाप्यशंसि ॥ ३ ॥
तत्रैव शान्ता भव भक्तिरक्ताः तपस्विनः कर्मविधिप्रसक्ताः
तृवर्गतृप्ता विमलात्मबोधा द्विजाग्रगण्या न्यवसन् नमस्याः ॥ ४ ॥
स्वयं निवृत्ता अपि लोकवृत्तेः इच्छाः परेषां परिपूरयन्तः
सन्मार्गयात्रारसिकाः कुलीना धर्मे प्रवीणा भवपोतवाहाः ॥ ५ ॥
सद्दर्शनेनैव जनाश्च येषां कामं पपुः शान्तिसुधां कृतार्थाः
आकर्ण्य वाचश्च पुनीतसत्वा अलौकिकं सत्पदमाश्रयन्त ॥ ६ ॥
तेष्वेव सद्विप्रवरेषु सौम्यो मुरारिदत्तो हरदत्तचित्तः
गोत्रे भरद्वाज मुनेः पुनीते बभौ बुधो ब्रह्मविदां वरिष्ठः ॥ ७ ॥
मन्त्रक्रियायां रससाधने च व्यासक्तवृत्तिः स्थिरचित्तवृत्तिः
गोसेवया शंकरसेवया वा निनाय कृत्स्नं समयं सुखेन ॥ ८ ॥

कर्तव्यमित्येव कृतानि कुर्वन् नचार्थकामो नच कीर्तिकामः
नित्यं यथाशक्ति परोपकारी हयाधिरूढो विजहार विप्रः ॥ ९ ॥
सन्तोष पोषी जितरोपदोषी सदा प्रसन्नोऽतिथिदेवसेवी
सुखेन कुर्वन् भवयाजियात्रां बभूव खिन्नोऽपि यदा कदाचित् ॥ १० ॥
देवर्षिकार्यादनृणोऽपि नाहं नूनं पितॄणाम् ऋणतो विमुक्तः
तच्छोधनं किन्तु जनाश्रितं न स्वयं विधिश्चेन्नहि शोधयेत्तत् ॥ ११ ॥
मर्त्यस्वभावेन विषण्ण एवं सदैव चिन्ता विकलो बभूव
सम्बोधितश्चापि मनो न मेने मौनं स तस्मात् व्यथते स्म चित्ते ॥ १२ ॥
वात्सल्यसौख्यानुभवाय केचित् केचित् स्वराष्ट्रोन्नतशक्तिवृद्धयै
केचित् निजोपार्जितवित्तभुक्त्यै पुत्रान् जगत्यामभिकामयन्ति ॥ १३ ॥
आर्याः पितॄणाम् ऋणशोधनाय ज्ञानप्रकाशाय शुभा जनाय
यशः प्रसाराय च यज्ञपूर्त्यै वाञ्छन्ति पुत्रान् कुलवर्धनाय ॥ १४ ॥
चिन्ताभिभूतोऽपि सुताधिगत्यै नासौ परं भूरि चिचिन्त चित्ते
स्थिति गृहिण्यास्तु विचिन्तयन्त्या विचिन्तनीयैव बभूव किन्तु ॥ १५ ॥
सृष्टा विकासाय भवे भवाय स्वभावतः स्नेहमयी कुलस्त्री
लभेत शान्तिं न विकासशून्या सर्वः स्वभावानुगतो जगत्याम् ॥ १६ ॥
मातेति तस्या श्चरमो विकासः तत्रैव तस्या जगती कृतार्था
भोगाय सृष्टा नहि केवलं स्त्री किं नाम जाया जननी नचेत्सा ॥ १७ ॥
स्नेहस्यधारा यदि सेचनाय प्राप्नोति किञ्चिन्न मृदुस्वभावम्
तत्रैव सा शुष्यति तर्हि शान्ता मृषा न पाषाणचये च याति ॥ १८ ॥
समीक्ष्य तां खिन्नगतिं गृहिण्या ययौ स तस्मात् शरणं शिवस्य
सम्पूर्यते यत्र मनोऽभिलाषा नोपेक्ष्यते यत्र वचश्च दीनम् ॥ १९ ॥

लक्ष्यैक दृष्टिः स्तवनप्रवृत्तोधृतव्रतोऽसौ शिवभक्ति निष्ठः
स्तुवन् निवृत्तो जपतः कदाचित् मनोगतं शङ्करमित्थमाह ॥ २० ॥

शम्भो स्वयं वेत्सि मदीयहृद्यम् निजात्मने किं बहु जल्पनीयम्
विज्ञोऽपि किन्त्वज्ञ इवासि मौनी तस्मादिदं स्पष्टमहं वदामि ॥ २१ ॥

सर्गे हि ते सर्वसुखाभिरामे "नाहं सुखी" नेति मृषा प्रभाषे
सदा स्वतन्त्रो विहरामि कामं पापेन केनापि नचास्मि दग्धः ॥ २२ ॥

ईर्ष्या परेषामुदये न काचित् द्वेषो न केनापि मनोविदारी,
स्वस्थः सदा स्वात्मरतिः प्रसन्नः सुखं स्वकीयं समयं नयामि ॥ २३ ॥

नाहं पराधीनमति र्भुजिष्यो न चापि तृष्णाधिविमर्दितोऽहम्
हसामि गायामि सदा सुहृद्भि र्वदामि शोचाम्यनियन्त्रितश्च ॥ २४ ॥

एको विकल्पो हृदयप्रमाथी मां वाधते किन्तु भवे तथास्मिन्
येनाभिभूतो विजहामि धैर्यं निद्रा च दूरीभवति क्षणेन ॥ २५ ॥

न संशयैरस्थिरमानसोऽहं स्थाणो स्थिरा मे त्वयि शुद्धवुद्धिः
सुधांशुशीतोऽपि सुधाह्रदे किं दाहानुभूतिं वत किन्तु कुर्वे ॥ २६ ॥

जाता नचेन्मे पितरः प्रसन्नाः सुखं मदीयं ननु किंसुखंतत्
म्लाने हि मूले न तरौ प्रसूनं नचापि काचित् सुषमा वनान्ते ॥ २७ ॥

निराश्रया भ्रातृचतुष्टयी मे सन्तानहीना श्वसिति प्रतप्तम्
साध्या समस्या मनुजेन नेयम् ऋतेप्रभो ! त्वां भुवि दीनवन्धो ! ॥ २८ ॥

गेहेऽसमदीयेऽपि भवेद्यथा ते सा वाललीला सुखसृष्टिशीला
कुर्याः कृपां तां भव सम्प्रति त्वं शून्यं गृहं ते कथयन्त्यपुत्रम् ॥ २९ ॥

भवन्तुतृप्ताः पितरोऽस्मदीया जायाश्चजायात्वमथाभियान्तु
कुर्वीत सेवां स गृहस्य बानो करोतु सेवां भुवनत्रयस्य ॥ ३० ॥

सर्वान्तिमं यत्र निवेदनं न स्तत्रैवमेतद् विनिवेद्य सर्वम्
मौनं क्षणं तिष्ठति शङ्कराग्रे तस्मिन्द्विजाग्र्ये दृढभक्तिभाजि ॥ ३१ ॥
विकासयन्ती भवनं समन्तात् क्षणेन सद्यो मनसि स्फुरन्ती
विश्वाससारा दृढभावनेयं समुत्थिता कापि नभोगिरेव ॥ ३२ ॥
" उत्तिष्ठ भो ब्राह्मण गच्छ गेहम् गृहस्थधर्मं चर सुप्रसन्नः !
स्वभावसिद्धा शुभभावनायाः सङ्कल्पसिद्धि भुवने भवस्य " ॥ ३३ ॥
इति श्रुतं श्रावयिता न कश्चित् दृष्टोऽथवा दर्शयिता च कोऽपि
नत्वा शिवं स्वात्मगृहं प्रतस्थे चेतोगतिः किन्तु चलाऽचलासीत् ॥ ३४ ॥
मार्गेऽथकेनापि विदाम्बरेण पृष्टः कथं भूरि विभासि विग्नः
रहस्यमस्मै विवृतीचकार शिवालये यत्तु यथानुभूतम् ॥ ३५ ॥
निशम्य सर्वं द्विजवर्य ऊचे प्रभोः प्रसादो मनसः प्रसादः
मनोरथस्ते फलितोऽद्यसर्वो ब्रूते न देवो वचसा स्फुटेन ॥ ३६ ॥
कृपाप्रसादं शिवशङ्करस्य शीघ्रं गुणाढ्यं तनयं लभेथाः
चिन्ता न काचिद् गिरिजा गृहस्थे वन्ध्या न भक्तिश्च भवे भवस्य ॥३७ ॥
पुण्यै र्महात्मन् भवताद्य लब्धा स्वाभीष्टपूर्तिर्दृढनिश्चयेन
परम्परा या च कुलेऽस्मदीये यत्नैः सदा सापि सुपालनीया ॥ ३८ ॥
सेवा गवां ते भवतु प्रधाना न गव्यपण्यं स्वगृहे विधेयम्
नवैद्य वृत्तिश्च धनस्य हेतोः कुलस्य वृद्धिं विपुलां लभेथाः ॥ ३९ ॥
प्रणम्य सर्वं शिरसा विनम्रः तथैव जग्राह वचो बुधस्य
फलेन शून्या न सतां समीहा श्रद्धा च नित्यम् स्थिरतां प्रसूते ॥ ४० ॥

अथ कतिपयमासानन्तरं भासमाना
नवदिनकररेखा कापि यत् प्रादुरास !
बहुविपद्भय-भीमा तामसी सा विलीना
प्रसुपद-निरतौ तौ तुष्टुवाते च शम्भुम् ॥ ४१ ॥

---

## हरनामामृते तृतीयः सर्गः

कृतौ कृतार्थौ पितरौ विधात्रा जातौ प्रसन्नौ कुलवर्धनेन
फलप्रतीक्षा सुफलेन पूर्णा ऋणं पितृणामनृणञ्च जातम् ॥ १ ॥
प्रसुप्रसादोऽधिगतो जनन्या मनोगति र्मोदमयी च सर्वैः
गृहे गृहस्थै रधिगम्यते या पुत्रोत्सवे सर्वसुखाप्तिसीम्नि ॥ २ ॥
सत्प्रार्थनायाः श्रुतिरद्य जाता सिद्धिंगता चाद्य सुसाधनापि
आशासरित् यत् पुनरद्य दृष्ट्या शुष्कापि पूर्णेव सुखं ससार ॥ ३ ॥
स्वभाव एष प्रकृतेरनादिः प्रमोदते सन्तति-जन्मनैषा
वर्षागमे केन पदे पदे सा जाताङ्कुरा हर्षभरा च दृष्टा ॥ ४ ॥
धन्यं कुलं धन्यतमा पुरी सा गंगाधरी धर्मधरासमृद्धा
लेभे स यस्यां वरजन्म पुण्यं जगद् विभातुं स्वमतिप्रभाभिः ॥ ५ ॥
नित्यं जगत्यामभिनन्दनीयं तस्यैव सज्जन्म जनैः कृतज्ञैः
सहस्रशो यस्य विकास हेतोः सर्गात् लभन्ते मनुजा विकासम् ॥ ६ ॥

अभूदयं संस्कृतसंस्कृताया भाग्योदयो भारतसभ्यतायाः
विद्योदयः कश्चन नूतनोऽसौ सन्मार्गदर्शी सुरलोकहर्षी ॥ ७ ॥

शास्त्रानुसारं विधिना विधाय संस्कार कार्याण्यखिलानि तस्य
हरेणदत्तः कृपयेति तातः तन्नाम चक्रे हरनामदत्तम् ॥ ८ ॥

पूर्णानि सर्वै गृहवर्तिसौख्यै स्ततो व्यतीयुः कतिचिद्दिनानि
स्थितं तथा नैव परं चिरं तत् स्थिरं न यज्जीवन चक्रमेतत् ॥ ९ ॥

गतिर्विचित्रा जनजीवनस्य नैका स्थिति र्यस्य कदापि काचित्
हसन् क्षणेऽस्मिन् परतो रुदन्सन् यस्मिन्नरो हन्त विरौति दीनम् ॥ १० ॥

जहौ न सूनुं हृदयैकसारं कार्यानुरोधादपि या क्षणेन
तामेव तस्मात् हरणोद्यताय नमोनमः कालविधानकाय ॥ ११ ॥

समर्प्य मौनं तनयं स्वकीयं स्तनंधयं ज्येष्ठपितृव्यपत्न्यै
जगाम सा तत्र गता हि यस्मात् लोकं पुनर्न प्रतियन्ति केचित् ॥ १२ ॥

हरेणदत्तं हरदेइ देवी पुपोष सा तं सुतनिर्विशेषम्
मनोविरुद्धञ्च न तस्य किञ्चित् तया कदाचित् हृदयेऽप्यकारि ॥ १३ ॥

धावन् सुवत्सैरजिरे प्रसन्नः खेलन् वयस्यै मुदितश्च नित्यम्
क्षणे प्रसन्नः कुपितः क्षणेन बालोह्यसौ कस्य मनो न जह्रे ॥ १४ ॥

क्षणे क्षणे काञ्चन नव्यभावां विशेषतां तत्र विकासयन् सन्
अवाप शिक्षासमयामवस्थां यस्यां द्विजत्वम् मनुजा लभन्ते ॥ १५ ॥

गुरोः कुलं तं जनको निनाय शुभे मुहूर्ते शुभवासरे च
तस्थौ क्षणं तत्र परन्तु नासौ कारागृहं तत् हृदि मन्यमानः ॥ १६ ॥

बाला: प्रकृत्या मृदव: स्वतन्त्रा: क्षणेन बन्ध: सुकरो न तेषाम्
लीलापरास्ते स्वतरङ्गसारा भवन्ति लीलारसिकावतारा: ।। १७ ।।

जानन्ति ते नो जनजन्म लोके सृष्टं विधात्रा परतन्त्रतायै
दमाय चेतोलहरीगतीनाम् भोगाय तत्तत्स्वकृतिक्रमाणाम् ।। १८ ।।

क्रीडामयी नित्यमहो व्यलोकि क्रीडापरैस्तै र्जगती समस्ता
बाल्यात् पराधीनमनोगतीनां किं जीवनं सम्प्रति किन्तु हा न: ।। १९ ।।

जाता वयं दास्यपरम्पराया: सञ्चालका: केचन जन्मजाता:
व्यक्तित्ववेधी सहज: समाज: संस्थापितोयत् निजबन्धनाय ।। २० ।।

मूका वराका: प्रकृतिस्वतन्त्रा: स्वार्थाय बद्धा: पशवो वनेभ्य:
संस्थापिता आयस पञ्जरेषु स्वाधीनचारा विहगाश्च दीना: ।। २१ ।।

न तस्य वृत्तिर्भविता तथा यत् धात्रा जनानां रचितो विमुक्त्यै
अनुसृतस्तद् विविधै र्वयस्यै र्बभ्राम तत्ताद् वनवाटिकासु ।२२ ।।

क्वचित्फलाना मवलुण्ठनेन क्वचिन्नदीना मवगाहनेन
क्वचिच्च रथ्यासु बृथा विहारै र्व्यत्यापयामास दिनान्यमूनि ।। २३ ।।

प्रेम्णाथ लोभेन च ताड़नेन सम्प्रेरिते नित्यविभर्त्सितेऽपि
सर्वैरुपायै रवशीकृतेऽस्मिन् श्रान्तोऽवशेषे गुरुरित्थमाह ।। २४ ।।

अस्यां नगर्यां विचरन् स्वतन्त्रो नासौ त्रिकालेऽपि पठेत् कथञ्चित्
प्रेष्य: क्वचिद्यत्र भवेद् विधेय: गेहेऽथवा नित्यमयं सुरक्ष्य: ।। २५ ।।

क्रीड़ापर: कूर्दति धावनात्मा कदाप्यधीते न च वर्णमेकम्
स्वयं विरक्तोऽध्ययनाद् विरक्तान् बालान् स्वतन्त्रानपरान् विधत्ते ।।२६।।

गुरोः सकाशादतिचिन्तनीयं श्रुत्वापि सर्वं मृदुमानसेन
कुलैकसूत्राय सुताय पित्रा नाबोचि किञ्चिन्मृतमातृकाय ॥ २७ ॥

कृतेऽपि यत्ने यदि नास्ति पूर्तिः प्रतीक्षणीयः समयोऽपि विज्ञैः
भाग्ये भवेद्यद् घटतां तथा तत् फलेन्न किञ्चित् समयात् पुरस्तात्॥२८॥

शुभाशिषायं सततं सुपोष्यः कृपा च रक्ष्या हृदये सदास्मै
ध्रुवं जगत्यां जगतीप्रसादो गुरुप्रसादात् सुलभो जनानाम् ॥ २९ ॥

एवं हि तातेन कृतः स्वतन्त्रो मुक्तश्च विद्यालयबन्धनेभ्यः
मनोऽनुकूलं विहरन् कदाचित् व्यायामशालां स गतः सुहृद्भिः ॥ ३० ॥

मल्लान् मिथोधर्षणसंनिलीनान् दृष्ट्वा ततः तत्र विशालकायान्
तेषां स्वभावं स्पृहयाञ्चकार शक्तिर्हि शक्तिं तरसाभियाति ॥३१॥

निरातपे शाखिसमीरसान्द्रे बालातपे वा शिशिरे प्रकामम्
गत्वा प्रशान्ते विपिने विविक्ते स पोषयामास शरीर शक्तिम् ॥ ३२ ॥

नानाविधैः पक्षिरवैः प्रमत्ते द्रुमैः फलाढ्यैः परिभूषिते च
सरित्तटे वा सरसीरुहेषु निनाय सर्वाणि निजक्षणानि ॥ ३३ ॥

नित्यम् प्रसक्तश्च शरीरमर्दे दुग्धस्य पाने घृतसेवने वा
मल्लाङ्गणे मल्लकथाप्रमत्तः सस्मार साध्यं किमपीह नान्यत् ॥ ३४ ॥

अद्यापि तन्मल्लपदे प्रसिद्धे साभ्यङ्गभङ्गी स्फुटताम्प्रयाति
कृष्णापि शुद्धा परुषापि मृद्वी मृत्सा यदीया प्रथिता ससारा ॥ ३५ ॥

विराजते चात्र जितेन्द्रियस्य श्री रामदूतस्य मनोजवस्य
मूर्तिं विशाला भवभीतिहन्त्री विशाल बुद्धेः पवनात्मजस्य ॥ ३६ ॥

यद्दर्शनेनैव बलस्य वृद्धि र्निर्भीकता चैति जनस्य चित्ते

स्मृत्वा च यन्नाम नरा अधीराः सद्यः स्वधैर्यम् हि पुन र्लभन्ते ॥३७॥

तत्रैव निश्चिन्तमतिः स्वमत्तः स ब्रह्मचारी दृढवृत्तिधारी

अचेतने चेतनशक्तिदात्रीं शरीर शक्तिं बवृधे विशालाम् ॥ ३८ ॥

न निर्बलै रात्मबलं हि लभ्यं नच प्रकाशोऽपि सहोऽसमर्थैः

जीर्णे विशीर्णे विकले शरीरे र्न कापि शक्ति नच कोऽपि बोधः ॥ ३९ ॥

समीहमानः स्वकुलस्य वृद्धिं पिता विवाहेन च तं निबद्धुम्

सम्प्राप्य काञ्चित् सुकुलप्रसूतां गुणान्विताम् सर्वविधिप्रशस्ताम् ॥ ४० ॥

स्थानेश्वरात् हर्ष विकासभूमेः गीताप्रकाशेन विभासमानात्

सुलक्षणां सौम्यवधूं विधानै र्हर्षातिरेकेण गृहम् निनाय ॥ ४१ ॥

जाते विवाहेऽपि गृहस्थधर्मे काचिद्रति र्नास्य बभूव किन्तु

मल्लस्वभावः पृथगेव कश्चित् प्रेयान् रसस्तस्य च भिन्न एव॥ ४२ ॥

शतै र्जनानां परिवारितोऽसौ सर्वत्र विख्यातबलः स्वतन्त्रः

यथा पुरस्तात् नगरस्थलेषु स्वच्छन्द वृत्तिः सततम् चचार ॥ ४३ ॥

अस्यां स्थितौ परमखिन्नमति र्मुरारि

गत्वा मुरारिशरणं विनतो ह्युवाच

"यन्नो घटेत भुवि यत्नशतैः कथञ्चित्

सद्यः तदीशकृपया घटते जगत्याम् ॥ ४४ ॥

—x—∞—x—

प्रतीक्षमाणः समयानुकूल्यं विरम्य नित्यात् प्रतिबोधनात् तत्
तूष्णीं स तस्थौ कतिचिद्दिनानि प्रभो विधानाय समर्प्य सर्वम् ॥ १ ॥
खिन्नं तथा तं प्रसमीक्ष्य तातम् स्वस्मिन्नुदासीनमतिं सदैव
ब्रूते किमर्थं न यथा पुरायं मयेति पुत्रोऽपि हठात् चिचिन्त ॥ २ ॥
प्रसादानयैव पितुर्ययौ तद् गुरो गृहं पुस्तकपाणिरेष
कार्थं कश्चित्कारणतो विचित्रं रूपं जगत्यां श्रयते विभिन्नम् ॥ ३ ॥
दृष्ट्वा हि तस्मिन् परिवर्तनं तत् पितु र्मनश्चापि दधार धैर्यम्
स्वयं नवीने सुपथे गृहीते लक्ष्यं कदाचित् लभते चलोऽपि ॥ ४ ॥
प्रीतः स पुत्रं निजगाद भद्र "त्याज्या त्वया सम्प्रतिमूर्खगोष्ठी"
प्रत्यायिता तस्य पुरस्तदाज्ञा मौनेन तेनाप्युररीकृतेव ॥ ५ ॥
अथैकदा वामनपर्वपक्षे समाकुले जानपदैश्च पौरैः
मल्लाहवोऽभूत्परमः प्रसिद्धो महोत्सवे सर्वजनाभिरामे ॥ ६ ॥
नानाप्रदेशागतमल्लवीरा विशालवक्षःस्थलदीर्घजंघा
प्रदर्शयन्तः स्वकला विभिन्नाः प्राहर्षयन् दर्शक चित्तवृत्तीः ॥ ७ ॥
तेष्वेव कश्चित् स्वबलाभिमानी विचूर्णयंस्तन्नगराभिमानम्
लोकान्मुहु र्धर्षयति स्म यस्मात् शशाक सोढुम् नहि तन्मनस्वी ॥ ८ ॥
मल्लस्वभावेन हृतोपदेशः स्मृत्वापि तातस्य वचांसि तानि
सम्प्रेर्यमाणः समयेन तेन क्षणेन मल्लाङ्गणमाविवेश ॥ ९ ॥
आचार्य नामस्मरणानुपूर्व्यम् निध्याय वातात्मजवीरमूर्तिम्
रंगस्य धूलीं शिरसा दधानः आस्फालयन् बाहुतटं सतालम् ॥ १० ॥

परस्परं मल्लकलाभिलीनो हस्तेन धृत्वा प्रतिमल्लहस्तम्
सम्पश्यतामेव ततो जनानां न्यपातयद् भूमितले भटं तम् ॥ ११ ॥
स्फूर्त्या स्वकीर्त्याश विशालशक्त्या स्वस्थान कीर्तिं परिदीपयन्सन्
मुरारिसूनु विजयी विरेजे क्षणे क्षणे लब्धजयाधिघोषः ॥ १२ ॥
कथं पुनः पूवपथं प्रपन्नः पठेद्सावित्यधिखिन्नचेताः
हृष्यत्सु लोकेष्वपि न किन्तुतातः सेहे वचोभङ्गमिमं सुतस्य ॥ १३ ॥
वचः शरैस्तद् वहुधा विविध्यन् स्थाने स तस्मिन् जनसंकुले ऽपि
विभर्त्सयामास सुतं दुरुक्तैः "पुरोमुखं मे नहि दर्शयेति" ॥ १४ ॥
अपिस्वभावं जनकस्य जानन् मर्माहतोऽयं सुहृदां समाजे
क्षुब्धः क्षणं स्तब्ध इवावतस्थे ससार मौनञ्च ततः सखेदः ॥ १५ ॥
तैस्तै विकल्पै र्विचलात्मवृत्तिः सर्वान् परित्यज्य सखीन् निगूढः
निर्लक्ष्यगामी व्यवसायशून्यो वभ्राम वाह्ये नगर प्रदेशे ॥ १६ ॥
दैवात्तु तावन्मिलितेन मार्गे केनापि वृद्धेन सतत्र पृष्टः
"किंभो ! कथं भ्रायसि कानने ऽस्मिन् कस्माच्च तेनाद्य मुखं प्रसन्नम् ॥१७॥
किं नूतनं कारणमद्य जातम् सदा प्रसन्ने यदुदेति चिन्ता
विज्ञाय हेतुं स उवाच तस्मै नाद्यापि ते बाल मतिर्विलुप्ता ॥ १८ ॥
क्रोधोऽपि पुत्राय शुभाभिलाषी हिताय नित्यं जनकोपदेशः
तस्मात्त्वया चापि तदेव कार्यं येन प्रसीदेज्जनकान्तरात्मा ॥ १९ ॥
विद्याप्रकाशो द्विजगेह भासी भवप्रकाशी च विभुः स्वभावात्
सर्वप्रतिष्ठाजनकः स लोके हेतुः स सौख्यस्य सनातनस्य ॥ २० ॥

उच्चैः प्रशंसावचनै रुदीर्णा क्षणाय लब्धा यदि साधुवादाः
तेषां प्रभावोऽपि भवे क्षणाय मृग्यं त्वया किञ्चन नित्यमस्मिन् ॥ २१ ॥
गृहे स्थिता ते गृहिणी क गच्छेत् तातश्च ते सम्प्रति किं करोतु
तपांसि तप्त्वा स्वकुलस्य वृद्धयै प्राप्तोऽसितत् वेत्सि नकिं कुवृद्ध ? ॥२२॥
तद् वेद्मि सर्वं नहि किन्तुवेद्मि क साम्प्रतं मे स्थितिरस्तु काचित्
स्थेयं गृहे नेति दृढो विचारः तातो भवद्भिः परिसान्त्वनीयः ॥ २३ ॥
बयो व्यतीतं समयो व्यतीतः पठामि किं पाठयताच्च मां कः
व्यायामसौख्येन समं न सौख्यं हेयो न सद्यश्च मनोऽनुषङ्गः ॥ २४ ॥
एतावदुक्त्वा च पुनः प्रणम्य ययौ स तस्मात्त्वरितं प्रदेशात्
वृद्धोऽपि मौनं निजगाद खिन्नो बलीयसी केवल मीश्वरेच्छा ॥ २५ ॥
अलक्षितः सन् यमुनातटेन स देहलीदिक् पथिको बभूव
नाज्ञसिषु स्तस्य गतिं च केचिद् गवेषयन्तोऽपि गुरुप्रयत्नैः ॥ २६ ॥
तत्रापि मल्लै र्यमुनाप्रदेशे कृतादरः कीर्तिकृति प्रसारी
निनाय पौरै रभिनन्द्यमानः सुखं स्वकालं स्वकलानुकूलम् ॥ २७ ॥
घटेत तत् किन्तु चिरं न लोके प्रियं न यत्स्यात् प्रकृति प्रवृत्त्यै
तस्मादकस्माद् बलगर्वितोऽसौ जनोत्सवे काप्यधरी बभूव ॥ २८ ॥
केनापि मल्लेन महाबलेन सद्योगृहीतावसरेण तस्मिन्
अतर्कितं तद् विहितं क्षणेऽस्मिन् नतं शिरो येन सदोन्नतं तत् ॥ २९ ॥
कीर्तिः क्वचिद् गन्तुमिव प्रवृत्ता क्षणेन सर्वं परिवर्तितञ्च
नित्यंन किञ्चिज्जगतीतलेऽस्मिन् सदा जयी नैव च कोऽपि लोके॥ ३० ॥
जाते नते मूर्ध्नि सदा समुच्चे व्याप्ते प्रमोदे च विपक्षपक्षे
चित्तं विधात्रास्य विडम्बितं सत् चिन्ताभिभूतं भृशमुच्चचाट ॥ ३१ ॥

यशोविहीनं नरजीवनं किं यज्जीवनं तद्यश एव लोके
यत्र स्थितं मानवतैव नित्यं तत्रैव हीनोऽपि कथं वसेयम् ॥ ३२ ॥
गत्वा च किं नाम वदामि तातं नाकर्णितं यस्य वचः कदाचित्
बलेन बोधेन च वंचितः सन् कथं मुखम्वा परिदर्शयामि ॥ ३३ ॥
स्थितो गृहे चेन्न पुरा कदाचित् पित्रा गृहिण्याच विबोधितोऽपि
किमद्य तत्रावनतेन मूर्ध्ना प्रविश्य मौनेन मया विधेयम् ॥ ३४ ॥
तस्माद् वरं मे परदेशवासः शरीशक्तेश्च तथाभिवृद्धिः
यथा समागत्य पुनः स्वदेशे लुप्तां स्वकीर्तिं पुनरुद्धरामि ॥ ३५ ॥
व्यग्रं निशम्यास्य समीहितं तत् हितैषिणैकेन महाशयेन
प्राबोधि किञ्चित् सहसा न कर्तुम् कर्तव्यमार्गं सुपरीक्षितुञ्च ॥ ३६ ॥
स्वभावतः सज्जनचित्तवृत्ति र्नित्यं परेषां यतते हिताय
वचांसि तेषां न मनांसि केषाम् प्रभावयन्त्यप्रतिमैः प्रभावैः ॥ ३७ ॥
मन्ये कुलीना न भवन्ति दीना न मानहीना श्च वसन्ति मान्याः
पराजयश्चेत् परमेकतः स्यात् जयाय धीमान् परतो यतेत ॥ ३८ ॥
तस्मात्त्वया स्वात्मनि सापि काचित् प्रबोधनीयाऽनुपमा स्वशक्तिः
यथा भवेन्मानव जन्मसिद्धि र्भवे प्रसिद्धिश्च मनोऽनुकूला ॥ ३९ ॥
बलं हि नास्ते तनुमात्रवर्ति क्रिया हि सर्वा दधते स्वशक्तिम्
विवेकशक्ते र्नहि कापि सीमा शरीर शक्ति र्ह्रसते क्षणेन ॥ ४० ॥
न केवलं दैहिक शक्तिभावत्वं बुद्धे र्विकासोऽपि न ते विहीनः
जानासि तत्वं निपुणं कलानाम् जानामि यत्त्वं क्षणवीक्षणेन ॥ ४१ ॥
अत्रैव शास्त्राध्ययनं विधेहि बाराणसीं तद् ब्रज बा बदर्थम्
यत्रोभयी साधु विवर्धते ते शरीरशक्तिश्च विचारशक्तिः ॥ ४२ ॥

नाम्नैव काश्या हृतचित्तवृत्तिः श्रीविश्वनाथस्य च दर्शनाय
वाराणसीं पण्डितरङ्गभूमीं गन्तुं सयत्नः स बभूव सद्यः ॥ ४३ ॥
आदौ स्वयं यत् कुरुते न मर्त्य स्तत् कार्यते तेन बलाद् विधात्रा
व्रजेत् कदा कोनु पथे हि कस्मिन् देवो न जानाति कुतो मनुष्यः ॥ ४४ ॥
तस्मात् प्रतस्थे कृतनिश्चयोऽसौ विद्यावतामक्षयकोषभूमीम्
श्री विश्वनाथस्य पुरीं पवित्रां पुनः पदातिः स्वमनः सहायः ॥ ४५ ॥
वीरस्वभावः पृथगेव कश्चित् श्रयेत मान्द्यं न पराजितो यः
भवन्ति केचिद् विरता विघातात् केचिच्च तस्माद् द्विगुणं वहन्ति ॥४६ ॥
नैकेन केनापि विशृंखलास्ते समुद्धता वा स्वसमुच्छ्रयेण
नचापकर्षेण भवन्ति दीनाः स्वसाध्यसिद्ध्यै दृढनिश्चया ये ॥ ४७ ॥
प्रचण्डतापा शिशिरा सकम्पा रजोऽभिभूता तमसावृता च
पुरातनी सा क्व पदातियात्रा पदेपदे श्रान्तिमयी च दीर्घा ॥ ४८ ॥
विद्यार्थिनः किन्तु कदा स्वकष्टं विद्याधिगत्यां गणयन्ति किंचित्
लक्ष्यैकदृष्टि र्मनुजो न विघ्नान् समीक्षते नापि बिभेति तेभ्यः ॥ ४९ ॥
कालोह्ययं ते सुतशिक्षणाय कन्याविवाहाय धनार्जनाय
तद् गच्छ गेहं त्यज बालबुद्धिम् भुक्त्वा हि भोगान् भज रामनाम ॥५०॥
काश्यां गतिस्ते ननु भाविनी का यस्यां गुरूणां गुरवः पठन्ति
नो वेत्सि सूत्राणि चतुर्दशापि ज्ञातुञ्च सर्वं यतसे क्षणेन ॥ ५१ ॥
कुर्वंस्तु सर्वं श्रुतमश्रुतंतत् पश्यँश्चमार्गे प्रकृतिस्थलानि
देवाधिदेवं मनसा स्मरन् सन् वाराणसीं प्राप स मल्लधुर्यः ॥ ५२ ॥
विधाय गंगासवनं समीप्सितम् पुरारिसद्दर्शनतुष्टमानसः
प्रणम्य दुर्गां नगरीं विलोकयन् समाययौ संकटमोचनाश्रमे ॥ ५३ ॥

## ॥ हरनामामृते पञ्चमः सर्गः ॥

विद्यालयानाम् विबुधालयानाम् कलालयानाञ्च कुलैकभूमिः
वाराणसी विश्वपते र्विभूति र्विभ्राजते पण्डितराजधानी ॥ १ ॥
युगे युगे नव्यविमर्शशीलैः पुराणरक्षाप्रथितप्रतिज्ञैः
विद्वद्वरेण्यैः परिसेव्यमाना नित्यं नवा या च सदा पुराणी ॥ २ ॥
सृष्टा विधात्राऽनुपमा पुरी सा भ्रान्ते र्निरासाय मनःसुखाय
उदेति यस्यां वसतो जनस्य स्वयं प्रकृत्यैव निजावबोधः ॥ ३ ॥
सरित् सुराणां सुरभारती च यस्यां प्रसन्ने वहतः समाने
गङ्गातरङ्गै र्विजयातरङ्गा यस्याञ्च नित्यं सबलीभवन्ति ॥ ४ ॥
सद्यो जना यत्प्रतिभोपगूढाः सम्प्राप्य विज्ञानदृशम् मुनीनाम्
ब्रह्माण्डपारात् परतोऽपि किञ्चित् क्षणेन पश्यन्ति विभासमानम् ॥ ५ ॥
का नाम लोके नगरी पुरी वा तया कदाचित् समतां करोतु
कणे कणे यत्र कणादवृत्तिः सर्वं विशिष्टं भुवने विधत्ते ॥ ६ ॥
या तीर्थराजे सरति प्रसुप्ता सरस्वती क्वापि दृशोरदृश्या
वीथीसु सर्वास्वपि सैव तस्या जागर्त्यलं स्वःसरिता सरन्ती ॥ ७ ॥
बिभेति मृत्योरपि न तत्र मर्त्यो मृत्युञ्जयस्य स्मरणेन कश्चित्
शिवं विधत्ते सततं जनेभ्यः कालश्च तस्यामतिभैरवोऽपि ॥ ८ ॥
संघृष्य संघृष्य युगान्तरेभ्यो यस्याञ्च विद्वन्निकषोपलेषु
स्वरूपमूल्यं नियतं लभन्ते विद्याविचाराः सुपरीक्ष्यमाणा ॥ ९ ॥
तस्यां स काश्याम् पठनाभिलाषी महोदयः स्वात्मगतम् निवेद्य
लेभे प्रतिष्ठाम् हृदये गुरूणाम् विद्यानुरागाय विलक्षणाय ॥ १० ॥

मल्लेऽपि तस्मिन् युवके विशालाम् ताम्प्रेक्ष्य शास्त्राध्ययनप्रवृत्तिम्
प्रीता बुधास्तस्य मनोरथम् तम् स्वयम् सनाथम् विदधुः कृपार्द्राः ॥११॥
स चापि सर्वाः पठनैकवृत्तौ प्रसज्य वृत्तीः समयञ्च सर्वम्
स्वसाध्यसिद्धयै दृढनिश्चयात्मा सिद्धिं प्रसिद्धिञ्च सहैव लेभे ॥ १२ ॥
विद्याधिगत्यै सततं सुयोगो, न तत्र हेतु र्विभवो वयो वा
तस्यां प्रधाना प्रबलाभिलाषा तथा स्थितिः चित्तगतेः स्थिरा च ॥१३॥
योगेन सर्वं सुलभञ्च लोके न योगिनः क्वापि गते र्निरोधः
ध्येये निजे यः स्थिरचित्तवृत्ति र्नूनं स योगस्य फलान्युपैति ॥ १४ ॥
स्वयञ्च विश्वप्रकृति र्विशाला विलोक्य हृद्विह्वलतां जनस्य
मातेव सर्वस्य सदा दयार्द्रा कृतार्थयत्येव तपांसि नूनम् ॥ १५ ॥
न पुस्तकान्येव न सुप्रकाशो नच प्रवन्धोऽपि सुखासनानाम्
रम्याणि विद्यार्थिगृहाणि नासन् प्रासादतुल्यान्यधुनातनानि ॥ १६ ॥
दिवेव रात्रावपि ते तथापि प्रज्वाल्य पर्णानि विलोक्य पाठम्
निद्राप्रवृत्तेः परिहृत्य वार्ताम् विद्यार्थिलक्ष्यं व्यदधुः कृतार्थम् ॥ १७ ॥
शक्तिम् पदार्थग्रहणे विचित्राम् विलोक्य हृष्टा गुरवश्च तेषु
स्वतो ववर्षुः स्वगतं हि सर्वम् पात्रं न लोके सुलभं सदा यत् ॥ १८ ॥
लभेत शिष्यः प्रतिभानिधिश्चेत् स एव लाभः परमो गुरूणाम्
न यत्र शोच्यं भवतीह दत्तं कृतार्थतामेति च यत्र यत्नः ॥ १९ ॥
लब्धाश्च ते तेन महानुभावा भाग्येन योग्याः सहपाठिनोऽपि
परस्परं येषु विमर्शभासा स्वतो रहस्यं विशदीबभूव ॥ २० ॥
मन्ये कदाचित् स्वविकासहेतून् शिक्षैव तान् छात्रवरान् वृणोति
येभ्यः प्रभूता वलबद् विचारा लोकानसंख्यान् जनयन्ति नव्यान् ॥२१॥

शिवस्वरूपाः शिवसत्कुमारा दामोदराः शास्त्रिवराः प्रसिद्धाः
ख्याताश्च ताँत्येति विदाम्वरिष्ठा गंगाधराः काव्यदिवाकराश्च ॥ २२ ॥
न्यायाब्धिपोतो मरुमण्डलश्रीः श्रीस्नेहिरामो बुधवर्यधुर्यः
श्रीनानुरामो द्विजराजचूडः परे प्रसिद्धा वहवश्च विज्ञाः ॥ २३ ॥
एभिर्वयस्यैः प्रतिभासदस्यैः सदा सदाचारपरैः समृद्धः
स ब्रह्मचर्येण विभासमानः सिद्धः स्वयोगे स्थिरसम्प्रयोगः ॥ २४ ॥
काश्यां श्रुतात् पण्डितराज राजा-रामा त्तथा शिष्यवराच्च तस्य
श्री बालसूरे रभिलब्धभासा भाष्याब्धिनेतृत्वमकारि तेन ॥ २५ ॥
विशुद्धबुद्धिः प्रकृतिप्रबुद्धः परं स यावद् गतगेहमोहः
तत्वं जगाहेऽखिलवामङ् यस्य तावद्दयार्हास्य पितु र्दशाभूत् ॥ २६ ॥
नावाप्य वृत्तं पितरौ सुतस्य व्यग्रां गतिं यां हृदये लभेते
पितैव तस्यानुभवी जगत्यां पुत्रैकजीवा जननी तथा वा ॥ २७ ॥
श्रुत्वा यथा यद् घटितं तदातद् गवेषणे वन्धुगणे प्रवृत्ते
व्यर्थे प्रयत्ने व्यथितान्तरात्मा क्षणाय शान्तिं जनको न लेभे ॥ २८ ॥
भूरिव्ययेनापि दिनैरनल्पै दूरंगतानां सुलभं न वृत्तम्
जनस्तु योऽलक्षितवासभूमिः किं साधनं तत्कुशलाधिगत्यै ॥ २९ ॥
न वाष्पगन्त्री नच* मृत्तराणि गमागमस्याशु न साधनानि
मृग्यश्च पन्था भुवि नाल्पसख्यो येन व्रजेद् बांधवमार्गणाय ॥ ३० ॥
निद्रावियुक्तः क्षुधया विमुक्तः किं कृत्यमूढः सुतमोहमग्नः
निनिन्द नित्यं विफलं स्वदैवम् भृशं जगर्हे च गृहस्थधर्मम् ॥ ३१ ॥
अहो गृहस्थस्य गतिर्विचित्रा क्षणेन दीना ससुखा क्षणेन
पेया सदा यत्र सुधाऽद्वितीया वज्रस्य पाता अपि तत्र सह्याः ॥ ३२ ॥

---

*मोटर ।

सहैव दुःखञ्च सुखञ्च भोक्तुं गृहस्थवृत्तिर्विहिता विधात्रा
आशापगायामवगाहतोऽपि नैराश्यनक्रात् नहि यस्य मुक्तिः ॥ ३३ ॥
दीनां परित्यज्य वधूं वराकीमहो खलोऽसौ गतवान् क्व मूर्खः
किंनाम भाग्ये लिखितं मदीये कुलस्य का वा भविता दशेयम् ॥ ३४ ॥
यथा तथा तेन परं हि नीतो भक्तेन तद्दुःखयुतोऽपि कालः
अहर्निशं चिन्तयतोऽपि भक्ति श्चचाल शंभोश्चरणान्न तस्य ॥ ३५ ॥
भक्तं जनं नैजयते हि चिन्ता स्वभावतश्चापि नराः सुधीराः
निराश्रयायाः पति जीवनायाः कालो गृहिण्याः कथमेतु किन्तु ॥ ३६ ॥
तया परं शान्तधियैव सर्व-व्रतादिकं सद्मनि संचरन्त्या
"स्वयं कृपालुः स भवेत्कदाचित्" इत्याशया जीवन तन्तुराधि ॥ ३७ ॥
अहो विचित्रं कुलपालिकानां पतिव्रतानां कठिनं तपस्तत्
यस्मिन्नहो सह्यमतीव सर्वम् वाच्यं स्ववाचा च वचो न किञ्चित् ॥३८॥
स्वप्नायितं हा खलु सर्वमेतत् नारीसमाजेऽद्यतने तु किन्तु
लक्ष्यं किमासां नहि वेद्यमेतत् नचापि वेद्या हि गतिश्च तासाम् ॥ ३९ ॥
दास्यं हि यासां स्वजनोपसेवा कारा कठोरा स्वगृहस्थितिश्च
मनोऽनुकूलो न पतिः क्षणाच्चेत् विवाहविच्छेदविधिः सुसज्जः ॥ ४० ॥
स द्वैतहीनं परिपक्वभावे सर्वास्ववस्थास्वपि निर्विकारम्
विश्रान्तिभूमिं कलयन् मृषावाक् दाम्पत्ययोगं भवभूतिरद्य ॥ ४१ ॥
लब्धस्य नानाव्रतदानपुण्यैरवाप्य वृत्तं न चिराय तस्य
निसर्गधीरोऽपि पिता वियोगं शशाक सोढुं न सुतस्य भूयः ॥ ४२ ॥
यः कोऽपि यात्री पथि जातुदृष्टः स एव पृष्टो विकलेन तेन
"दृष्टः क्वचित् किं हरनामदत्तः किंचिद् श्रुतं वा विषये तदीये" ॥ ४३ ॥

इत्थम्विधैः संशयितैश्च भावै र्दोलाधिरूढाभवदस्य वृत्तिः
"एयात् पुनः किंन गृहं कदाचित् नयेत तंवा प्रकृति स्मृतिर्नः ॥ ४४ ॥
दुःखानि सर्वाण्यपि जीवनेऽस्मिन् कष्टाकराण्येव भवन्ति नूनम्
मनः परं संशयशूलविद्धं भवत्यसह्यं खलु मर्मवेधि ॥ ४५ ॥
दिनानि नित्यं न परं समानि कष्टस्य सीमापि सनातनी न
विलोकित स्तज्जनकेन कश्चिद् घनेऽपितस्मिन् तमसि प्रकाशः ॥ ४६ ॥
इष्टां स्वसूनोः प्रगतिं निशम्य तीर्थन्निवृत्तात् पथिकात् कुतश्चित्
काशीं प्रतस्थे सह पुत्रवध्वा स्वबन्धुवर्गैश्च हितैः कियद्भिः ॥ ४७ ॥
अहो सा कीदृशी रम्या यात्रा चेतोविकासिनी
आशापुष्पाणि फुल्लानि नित्यं यस्यां पदे पदे ॥ ४८ ॥
मार्गे सर्वेषु तीर्थेषु स्नात्वा विधिविधानतः
देवदेवं शिवं ध्यायन् सम्प्राप्तः पावनीं पुरीम् ॥ ४९ ॥
नाम्ना निर्देशमात्रेण प्रापितः पुत्रसन्निधौ
धन्यं मेने निजात्मानं दृष्ट्वा तं शिष्यसम्वृतम् ॥ ५० ॥
संभ्रान्तः स समुत्थाय चक्रे चास्य समर्हणाम्
अहो धन्यः स कालोपि गृहस्थानां सुखाकरः ॥ ५१ ॥
स्थिते पुत्रे क्षणं मौनं निर्निमेषं विलोकिते
समादिष्टः समानेतुं वहि द्वारि स्थितां वधूम् ॥ ५२ ॥
छात्रैरावश्यके सद्यो विहिते संविधानके
न्यवात्सुमुदितास्तेऽथ वर्णयन्तो मिथः कथाः ॥ ५३ ॥
स्मारं स्मारं पशुपतिकृपां तातवर्यः कृतार्थः
नीत्वा काँश्चित् सुखददिवसान् विश्वनाथस्य पुर्याम्
स्नायं स्नायं सुरसरिति सम् प्राप्तपुण्यप्रकर्षः
दृष्ट्वा पुत्रं गृहगतिरतं निर्वृतः सन् निवृत्तः ॥ ५४ ॥

## हरनामामृते षष्ठः सर्गः

याते ततोऽसौ स्वपुरीं निवृत्ते गृहस्थधर्मे निरतःसुखेन ।
समन्वितश्चापि सुतस्य सौख्यैर्वलीयसीं लोकगतिं प्रपेदे ॥ १ ॥
दृष्ट्वा गतिं यस्य मतिञ्च हृद्याम् नित्यं प्रसन्नौ पितरावभूताम् ।
स एव बालस्तनयो हतेन दैवेन हा हन्त हृतः क्षणेन ॥ २ ॥
ज्ञानं विलीनं जगती विलीना लीनञ्च सर्वं सुखशान्ति मग्नम् ।
विडम्बनामात्र मिदञ्च तस्मै सर्वं प्रतीतं क्षणिकं क्षणे ऽस्मिन् ॥ ३ ॥
शोकाग्निदग्धोऽपिभृशं हठेन लोकस्य मौर्ख्यं हसतिस्म चित्ते ।
स्थिरं कथंकारमहोऽस्थिरेऽस्मिन् लोको मृषा पश्यति नित्यमेष ॥ ४ ॥
खेलन् स बालो लुलुपे क्व सद्यः लीना स्मितिः साच शिशोः क्षणे क ।
भ्रान्तः स्मृतेरुत्कटघूर्णनेन प्रत्यक्षरूपं ददृशे परोक्षम् ॥ ५ ॥
शोकेन सर्वप्रथमेन शीर्णः सन्त्यज्य सर्वं नियतं स्वकर्म ।
एवम् यदा मौनपरः सदासौ सर्वत्र भेजे परमामुपेक्षाम् ॥ ६ ॥
वृद्धाः समागत्य बुधास्तदैनम् हठेन सर्वैरनुभूयमानैः ।
प्रबोधयामासुरनेकभावै र्गीतोपदेशै र्जगतीक्रमै श्च ॥ ७ ॥
"को वेत्ति कस्ते सुत एष आसीत् कुतः समायात् क्व गतः पुनर्वा ।
को वा समेता सदनं परश्वः नेदं रहस्यं मनुजेन वेद्यम् ॥ ८ ॥
यज्जीवनं तद्रचितं विधात्रा सुखस्य दुःखस्य च वेदनाय ।
यदेव यस्मिन् दिन एति किञ्चित् जनेन मौनेन तदेव सेव्यम् ॥ ९ ॥
भोग्यं हि यत् तत् खलु भोग्यमेव हातुं न तज्जातु जनेन शक्यम् ।
नचापि नित्यं जन एष दुःखी जीवन् हि यः सौख्यशतानि भुंक्ते ॥ १० ॥

स्मृत्यापि शोकस्य विकम्पमानो नूनं जनो विह्वलचित्तवृत्तिः ।
सञ्जायतेऽयं प्रकृतिस्वभावो धीरेण धैर्यं नहि किन्तु हेयम् ॥ ११ ॥
न जीवनं द्वन्द्वविहीनमेतत् कदापि भूतं न पुनश्च भावि ।
नचापि सृष्टेर्गतिरेकरूपा सनातनेऽस्मिन् हि भवप्रवाहे ॥ १२ ॥
दुःखेऽपि वज्रोपमचेतसा तत् सह्यं हि यतद् भुवि सह्यमेव ।
वज्रं पतन्तं प्रसमीक्ष्य मूर्ध्नि न पर्वतालिः प्लवते कदाचित् ॥ १३ ॥ ❀
सुखेऽपि दुःखेऽपि च सान्त्वनार्थै विवेकशक्तिः प्रभुणा प्रदत्ता ।
स्थितिं समालोच्य यथा जगत्या विवेकिनो दुःखनदीं तरन्ति ॥ १४ ॥
स्वयं स्वदुःखाभिभवो विधेयो भाव्यश्च विज्ञेन न मोहितेन ।
स एव विद्वानिति माननीयो बद्धो न मायाकृतबन्धनै र्यः ॥ १५ ॥
छित्वा स्वपाशांश्च परस्य पाशान् सर्वान् स्वतन्त्रान् विबुधो विदध्यात् ।
तस्यावतारो भवतीह लोके, भियां निवृत्यै भवजन्मभाजाम् ॥ १६ ॥
गतागतिर्यन्नियता जगत्यां गतोऽपि बन्धुर्न पुनः किमेतु ।
शीघ्रं भवान्याः कृपया लभेथा विचक्षणान् पुत्रवराननेकान् ॥ १७ ॥
तस्मात्प्रशान्तश्चर कर्म नित्यम् पुनश्च शास्त्रेषु मतिं निधेहि ।
सर्वात्मना कर्मरतस्य लोके चित्तं न शोकादभिभूतिमेति ॥ १८ ॥
एवम्बुधैः सम्परिबोधितात्मा कालेन पूर्वाञ्च गतिं गतोऽसौ ।
पुनर्यथापूर्वमभिप्रवृत्तोऽप्यध्यात्मविद्याभिरुचि र्बभूव ॥ १६ ॥
गुणेषु दृष्ट्वा परिवर्तमानाम् गतिं गुणानां विषमां समाञ्च ।
नित्यंस्थिरं शान्त मथाववोद्धुं शास्त्राणि सर्वाणि पुनर्ममन्थ ॥ २० ॥
नवानुभूत्या नव एव जातो नवेन बोधेन विभासमानः ।

---

❀ भयभीता स्वस्थानम्परित्यज्य अन्यत्र न पलायते इतिभावः ।

विद्यालये व्यैत् समयं समस्तम् निर्माय चर्यां नियतां दिनस्य ॥ २१ ॥
ब्राह्मे मुहूर्ते प्रकृतिप्रशान्ते विधाय गंगासवनं प्रशान्तः ।
दुर्गालये वा शिवमन्दिरे वा तस्थौ स्थिरो ध्यानसमाधिलीनः ॥ २२ ॥
अथैकदोन्निद्रितवृत्तिमेनम् रात्र्यास्तृतीयप्रहरे प्रबुद्धम् ।
स्नातुं व्रजन्तं समयभ्रमेण सोपानमार्गे निरुरोध कश्चित् ॥ २३ ॥
पुरःस्थितं वीक्ष्य विलक्षमेकं निरुद्धमार्गं सहसा कुतोऽपि ।
पप्रच्छ कस्त्वं कुत एषि किम्वा चिकीर्षितं ते त्वरितं वदैतत् ॥ २४ ॥
स्थित्वा क्षणं मौनपरेण तेन गीर्वाणवाचा विशदस्वरेण ।
ऊचे शनैः सर्वमिदं स्ववृत्तं तदात्मवृत्तश्रवणोत्सुकाय ॥ २५ ॥
शृणोमि नित्यं प्रयतो महात्मन् पातञ्जलं यद् विवृणोषि सारम् ।
दयार्द्रचेता असि सज्जनोऽसि शुद्धोऽसि नित्यं भजने रतोऽसि ॥ २६ ॥
संलापकामोऽवसरं प्रतीक्षे तुभ्यं सदा श्रावयितुं स्ववृत्तम् ।
आज्ञा त्परं किन्तु गतिर्मदीया नास्ते विधाने कठिने विधातुः ॥ २७ ॥
लब्धोऽद्य कश्चित् प्रकृतिप्रदत्तः सौभाग्यपूर्णोऽवसरो मयायम् ।
मत्तो न भीति र्भवता विधेया स्वयं विनम्रः शरणागतोऽस्मि ॥ २८ ॥
श्रुत्वा तदीयं वचनं विचित्रं विचिन्त्य चित्राञ्च गतिं जनानाम् ।
औत्सुक्यपूर्णो गतभीतिरेष पप्रच्छ नम्रः पुनरेनमेवम् ॥ २९ ॥
किंभो महात्मन् विबुधोऽपि हीनां पापीयसीं त्वं कुगतिं गतोऽसि ।
विज्ञातमनस्ते यदि दुर्दशेयम् अज्ञा लभेरन् बत कां गतिं न ॥ ३० ॥
नम्रेण तेनेदमभाणि विद्वन् ! सत्यं त्वदीयं वचनं किलेदम् ।
भोग्यं परं कर्मफलं हि सर्वैं मूढैरमूढैश्च समं सदेह ॥ ३१ ॥

विधेयमार्गात् च्यवते पदं न विधे विधानं स्वविधौ कठोरम् ।
सूचीमुखो वेद्मि न नाम तृप्ते र्भोक्तुं न शक्नोमि बुभुक्षितोऽपि ॥ ३२ ॥
विश्वासघातप्रतिशोध बुद्धि - समिद्ध वैर प्रतियातनाग्निः ।
शान्तोऽपि शत्रोरपकृत्य शान्तिं नाद्यापि मेऽन्तः करणं प्रयाति ॥ ३३ ॥
मत्तो नमूढो ऽप्यधिकश्च कश्चित् पंकेन यः क्षालितवान् स्वपंकम् ।
वैरेण वैरं तमसा तमो वा पापेन पापं च न शुद्धिमेति ॥ ३४ ॥
शरीरपातेऽपि मनःशरीरी दुःखानि जीवो विकटानि भुंक्ते ।
भावप्रधानस्य न भावनायाः कदापि पूर्ति र्भवतीह यस्य ॥ ३५ ॥
मयाप्यधीतं सुकृतं कृतञ्च नहि स्वभावेन खलो ऽहमस्मि ।
तथापि यद्राक्षसयोनिमाप्तो बलीयसी कर्मगतिर्हि लोके ॥ ३६ ॥
निशम्य तद वृत्तमिदं मदीयं परोपकाराय धृतप्रयत्ने ।
उदेतु चित्ते करुणामये ते मदुद्दिधीर्षामतिरद्य सद्यः ॥ ३७ ॥
विलोक्य तं चेतसि विस्मितोऽयं श्वेताम्बरं दुर्गतिकं हताशम् ।
पप्रच्छ किं ते करवाणि बन्धो ! संभाषमाणं विकलस्वरेण ॥ ३८ ॥
कृपालुनैवं विहितानुकम्पः पश्यन्निवान्तं निज पापराशेः
मग्नो नवाशामृतनिर्झरेषु सगद्गदं वाक्यमिदं जगाद ॥ ३९ ॥
भूजन्मनां मुक्तिपदाधिरोही मार्गो य एको विधिना व्यधायि ।
तस्यां गयायां न गतिर्हि यावत् सह्यं मया तावदिहैव कष्टम् ॥४० ॥
विज्ञाय तद्दुःख निवृत्ति हेतुम् अहेतुबन्धुः परिसान्त्वयंस्तम् ।
अद्यैव गंगाजलमार्जनेन त्वां मोचयामीति वचोऽभ्यवोचत् ॥ ४१ ॥
सद्यो गयायां पितृभिः स्वकीयैः श्राद्धैश्च गन्तासि सपिण्डभावम् ।
पिशाचयोने स्तव मोचणाय कालो न दूरे भव निवृंतस्त्वम् ॥ ४२ ॥

प्रणम्य चैनं प्रणतं प्रयातः स्नाना न्निवृत्याथ विचार्य शिष्यैः
व्यधत्त तं दुर्गति दुःख मुक्तम् सम्प्रेष्य विप्रै र्विधिवद्गयायाम् ॥ ४३॥

अथ विचार्य गतिं मनुजन्मनाम्,
इह शुभाशुभकर्म निबन्धनाम् ।
प्रबबृधेऽस्य रुचि र्निगमागमे,
भवविमुक्तिपथैक्यविहारिणि ॥ ४४ ॥

## सप्तमः सर्गः

शास्त्राब्धि निर्मन्थनमत्तमूर्ते - रार्यत्वरक्षाप्रवणैकवृत्तेः ।
शनै शनैस्तस्य ततः सुकीर्तेः सरिन् मरौ चापि ससार सौम्या ॥ १ ॥
तरङ्गिणी या तरलीचकार छात्रव्रजानां विदुषां समन्तात् ।
सम्पादयन्ती सरसानि सद्यः चेतांसि सद् ज्ञान पिपासितानाम् ॥ २ ॥
धन्वेऽपि विद्यामृतवर्षणाय सम्प्रार्थितः शिष्यगणैश्च कैश्चित् ।
काशीपरित्यागविचार जन्यं पापोदयं तं हृदयेऽनुमेने ॥ ३ ॥
तदैव दैवप्रहितो मनस्वी सत्श्रेष्ठिवर्यो भगवानदासः ।
विद्यानुरागी धृतधर्मबुद्धिः प्रणम्य विज्ञं विनतो बभाषे ॥ ४ ॥
विद्वन् धरित्र्यां बहवः प्रदेशाः सर्वेऽपि काश्यां कथमावसन्तु ।
यत्रापि विद्वान् कुरुते निवासम् वाराणसी तत्र सविश्वनाथा ॥ ५ ॥
व्याप्तापि सर्वत्र तिरोहितैव शिवस्य काशी भुवने विशाला ।
यावत्तु: तां ज्ञानमयैः प्रकाशै र्मनीषिणो नैव विभावयन्ति ॥ ३ ॥
श्रुत्वा वचस्तस्य सुयुक्तियुतं विहस्य तं शान्तमति र्जगाद ।
श्रेष्ठिन् क्व नेतुं यतसे वृथा माम् देशं प्रसिद्धं मतिविभ्रमाय ॥ ७ ॥

गंगातरङ्गालिकृताभिषेकः नित्यञ्च विश्वेश्वरदर्शनार्थी ।
काशीं परित्यज्य कथं हि कश्चित् प्रयातु तां वारिविहीनभूमिम् ॥ ८ ॥
शास्त्रैकचर्चामृतपानतृप्तः सरस्वती निर्झरिणीप्रसिक्तः ।
प्रचण्डमार्तण्डकराभितप्ते देशे प्रवाते ज्वलितुं व्रजेत्कः ॥ ९ ॥
जाने मरुस्था विनता विशुद्धा विद्यार्थिनः सन्ति विचक्षणाश्च ।
वाराणसी तैरपि किन्तु सेव्या स्थेयञ्च विश्वेश्वर पदमूले ॥ १० ॥
इत्थ निजार्थं विदुषाम्वरेण तिरस्कृतं वीक्ष्य विलक्षितः स ।
गतोऽपि नैराश्यमिवेष्टसिद्धौ निनीषयैवं पुनराबबन्ध ॥ ११ ॥
अहो महात्मन् मनुजस्य लोके सीमा हि भीति वंत कल्पनायाः
स्वप्नेऽपि यन्नैति दृशं कदाचित् सृजेन्नवं शैलमिवैव तत्सा ॥ १२ ॥
प्रशंसितोऽयं चरकेश्वरेण शरीरविज्ञानविचक्षणेन ।
स्नेहार्द्रभावैकरसैः विशिष्टः शुष्कोऽपि नित्यं सरसः स देशः ॥ १३ ॥
न निन्दनीयो नच शंकनीयोः मरूप्रदेशोऽमर भूमिरद्य ।
यः पांसुलोऽपि स्वशुभैश्चरित्रै रपांसुलानां धुरि कीर्तनीयः ॥ १४ ॥
काश्यामभावो विदुषां न कश्चित् मरूप्रदेशः सुधियामपेक्षी ।
तृप्ति र्विधेया क्षुधितस्य पूर्वं किं तर्पणं तृप्ततमस्य लोके ॥ १५ ॥
का नाम विद्या द्रविणञ्च किंतत् यन्न प्रयुक्तं सुकृतौ परेषाम् ।
तनुष्व कीर्तिं मरुमण्डले तत् प्रवाहयन् धर्मविचारधाराः ॥ १६ ॥
ज्ञानप्रकाशस्तमसि प्रकाश्यः स्वयं प्रकाशैव सदैव काशी ।
मरुस्थले यत्पृषदोऽपि मूल्यं धाराधरस्यापि न तत्समुद्रे ॥ १७ ॥
निवारिते चापि बुधैश्च तत्र क्वचित् क्वचिद् वाप्यतमः प्रसारे ।
अद्यापि नोदेति विभाकरः स आभ्यन्तरं येन तमो विनश्येत् ॥ १८ ॥

अर्थैः कृतार्थोऽपि मरुप्रदेशो ज्ञानाग्निपूर्णो नहि यावदास्ते ।
लब्ध्याधिगत्यै क्षमते न तावत् न वीक्षते कोऽपि निमीलिताक्षः ॥ १६ ॥
धर्मार्थयो; संगम एव सौख्यं धर्मं विनार्थो न धनं विषं तत् ।
दाहैककर्मानल एव लोके ऋते हि यज्ञं क्षमते न वृष्ट्यै ॥ २० ॥
विभासते दिक्षु सरन् विवस्वान् पातीह लोकाँश्च चरन् नभस्वान् ।
देशाटनं तद् विबुधैर्विधेयम् लोकस्य कल्याणधियापि नित्यम् ॥ २१ ॥
यस्मिन्नहम्बुद्धिविवृद्धवन्हि दग्धा मतिश्चाकुलिता भवेन्न ।
सर्वेऽपि देशाः सुखशान्तिरम्याः स्वयं स्वदेशाः प्रभवन्ति तस्मै ॥ २२ ॥
न नीरस चेत् सरसं विधत्ते कथं विशिष्येत बुधस्य बुद्धिः ।
विशेषता सैव सुधाकरस्य ग्रावापि यस्माद् द्रवते द्रवेण ॥ २३ ॥
प्रोत्साहितैस्तद् वचनै महार्थैं मरौं दिदृक्षाजनकानि भूरि ।
रम्याणि शिष्यैरपि वर्णितानि तस्य प्रदेशस्य सुखानि भूयः ॥ २४ ॥

## —मरु सौन्दर्यम्—

मरु सुवर्णो नहि येनदृष्टः किं तेन मान्याः ! कुहचित् सुदृष्टम् ।
मरौ सुमेरुः स्फुटमेव भाति मृग्यः स कृष्णासु कथं शिलासु ॥ २५ ॥
रम्ये क्वचित् सैकतवप्रसानौ सुकोमले भास्वति हेमवर्णे ।
प्रातः प्रदोषे च सुखं स्थितस्य न कस्य चेतः स्वविकासमेति ॥ २६ ॥
स शीतलो गंधवहः समीरः स तित्तिराणां मधुरो विरावः ।
तन्नर्तनं वर्ह विभूषणानां समुत्प्लुतिः साच कुरङ्गमाणाम् ॥ २७ ॥
ते तुन्दिलाः स्वादुरसाः कलिङ्गाः सा शारदी चञ्चलचन्द्रिकाच ।
स्फूर्तिः स्फुरन्ती स्फुरगावलीषु क्रमेलकानां गतयश्च वास्ताः ॥ २८ ॥

आसारगंधः परितः प्रसारी भूमे विशुद्धिं प्रकटीकरोति ।
तेजस्विनी गीतिगतिश्च मत्तां सर्वां स्वरोत्थांम् जगतीम् विधत्ते ।। २९ ।।
गावः प्रसन्ना मनुजाः प्रसन्ना देवाः प्रसन्ना व्रतदानयज्ञैः ।
किं नाम तद्यन्न मरौ समृद्धम् विद्या समृद्धो भवता विधेयः ।। ३० ।।
पलाशिनो विप्रवरा न यस्मिन् विजृम्भते यत्र च वीरवृत्तिः ।
हरेर्जनानां हरिभक्तिभाजां गुञ्जन्ति वाण्यः सुरसाश्च यस्मिन् ।। ३१ ।।
वर्षागमे चारुमरुं विहाय क्वान्यत्र कस्यापि रमेत चित्तम् ।
सरःसु वर्षासमयेऽपि यस्मिन् शरत् प्रसन्नं सलिलं चकास्ति ।। ३२ ।।
इत्थं मुहुस्तद्गुणवर्णनेन शिष्यानुबन्धैरभियाचितैश्च ।
सम्प्रेरितोऽन्तर्हितया नियत्या गन्तुं बुधस्तत्र तदानुमेने ।। ३३ ।।
यत्रापि सा वाञ्छति यं नियोक्तुं तत्रैव सा तं प्रहिणोति नूनम् ।
मूल्यं न किञ्चिज्जनभावनायाः सम्मर्दनायैव समुत्थितायाः ।। ३४ ।।
न मानवं पृच्छति सा कदाचित् बुद्धेरजीर्णेन विशीर्णवृतिम् ।
क्रियाहि तस्याः पृथगेव काचित् पृथक् च तस्याः करणप्रकारः ।। ३५ ।।
गुप्तं सुगुप्तं विदधाति यस्मात् निजं विधेयं नियति प्रभावः ।
नकोऽपि जानाति कदाहि केन स्थेयं क्व वाकुत्र चगम्यमस्ति ।। ३६ ।।
तस्मादचिन्त्यं वहुधा जगत्यां सदैव तत्तद् घटते विचित्रम् ।
स्वप्नेऽपि लोकैरवितर्कितैव स्थितिश्च काचित् प्रकृतिप्रियास्ते ।। ३७ ।।
इत्येव विद्वान् स विनम्रमौलि र्विश्वेश्वरस्यानुमतिं ययाचे ।
नत्वान्नपूर्णामथजन्हुकन्यां प्रणम्य काशीं च ततश्चचाल ।। ३८ ।।
केचिच्च शिष्या गुरुतीर्थमेनं विहाय काशीमनुजग्मुरार्यम् ।
अधीतिलुब्धा सुधियः प्रगल्भा न पक्षपातो हि गुणेषु केषाम् ।। ३९ ।।

काशीं विहायाद्य गतः स धीमान् भाष्याब्धिचन्द्रो हरनामदत्तः ।
श्रुत्वेतिसर्वे विकलीभवन्तो बुधाश्च केचिन्मिथएवमूचुः ॥ ४० ॥

शुष्कोऽद्य शास्त्रार्थरसो नगर्याः पन्था निरुद्धश्च रहस्यभूमे ।
प्रतीयमानोऽपि महानभावः प्रत्यक्षरूपेण विभाव्यतेऽसौ ॥ ४१ ॥ ❋

बुधैरेवं काश्यां स्मृतगुणगणः सोऽथचशनैः
शनै राजस्थानं विदितमहिमानं शुचिमतिः ।
यशस्वी सम्प्राप्तः पथि बुधजनैरर्चितगति ।
महः साक्षात् काश्या इव सतनु तन्वन् दिशियशः ॥ ४२ ॥

## अष्टमः सर्गः

श्रुत्वाथ तस्यागमनं बुधस्य प्रतीक्ष्यमाणं सुजनैश्चिरेण ।
चूरूपुरं तद्भृशमापुपूरे शिष्यैस्तदीयै र्विबुधै स्तथान्यैः ॥ १ ॥

कुर्वन्ति लोकाः सुनृपस्य मानं नेतुश्च राष्ट्रार्पितजीवनस्य ।
श्रद्धा जनानां हृदये लसन्ती बुधाय भिन्नैव परं जगत्याम् ॥ २ ॥

विद्यास्फुरन्तीव विभासतेस्म तस्यानने सौम्यविभावभव्ये ।
दिव्याकृतिं यं समवेक्ष्य नृणां शिरांसि भक्त्या स्वयमानतानि ॥ ३ ॥

विशालभाले रुचिरे निसर्गात् सद्धर्ममूर्तेः सुसमाहितस्य ।
काचित् पवित्रा प्रभुभक्तिकान्ति नित्यं रराजेऽस्य महोदयस्य ॥ ४ ॥

शान्ताः कथानां श्रवणे निमग्नास्तत्वार्थशंङ्का विनिवारणाय ।
ताँस्तान् गभीरान् विमलान् विचारानाकर्णयन्तोऽनुगता जनास्तम् ॥ ५ ॥

---

❋ अभावोऽपिभावरूपेण भासतेस्म ।

प्रतिक्षणं तत्परितः स्थितानां श्रद्धावतां धर्मविवेक-वुद्धिः ।

कं कं विकासं न नवीनमाप्नोत् सर्वं हि यत् हृष्यति सुप्रभाते ॥ ६ ॥

सन्यासिभिर्विज्ञवरैरनेकै रन्यैश्च सद्भिः सुविचारशीलैः ।

संलाप मग्नस्य स तस्य कालो न कस्य चित्तं विमलीचकार ॥ ७ ॥

कालस्य तस्य स्मृतिरेव रम्या बोधाय बोधो भवति स्म यस्मिन् ।

विडम्बनेयं महती वुधानां हास्याय विद्या यदवाप्यतेऽद्य ॥ ८ ॥

दृश्येत सा क्वाद्य महामहिम्नां स्थिरामतिः स्वात्मरतिश्चतेषाम् ।

कणं कणं लब्धुमहो कुतश्चित् लोभान्विताश्चेत् सुधियोभ्रमन्ति ॥ ६ ॥

ययापि रीत्या द्रविणागमः स्यात् सासैव विद्या परिगण्यतेऽद्य ।

सौढुं क्षमा नाऽद्य रहस्यबोधम् क्षुधानिवृत्तेः परमा समस्या ॥ १० ॥

॥ विद्याविलासः ॥

"निरक्षरे वीक्ष्य महाधनत्वं विद्या न हेया विदुषा कदाचित्"

स एष सर्वप्रथमोपदेशः परं सदा तेन वुधेष्ववर्षि ॥ ११ ॥

विद्यासमं वित्तमहो किमन्यत् किं बा सुखं तत्समतां करोतु ।

सर्वोऽधिकारी यदवाप्तियत्ने यया स्वयं तुष्यति चान्तरात्मा ॥ १२ ॥

विद्यामृतं येन नरेण पीतं पेयं किमन्यत् ननु तेन लोके ।

पदे पदे यस्य कृते विकीर्णः सुधाप्रवाहो भवतीह नित्यम् ॥ १३ ॥

न कुत्र विद्यारथिनो रथस्य गतिर्ह्यनन्ते भवतीह सद्यः ।

स्वयञ्च तस्मै किमुनाम गुह्यं निजंरहस्यं विवृणोति नो बा ॥ १४ ॥

उन्मील्यते बोधविभाकरेण यथायथाऽभ्यान्तरचक्षुरस्य ।

तथा तथा कापि नवैव सृष्टिः क्षणे क्षणे दृष्टिगता विभाति ॥ १५ ॥

नृपः स्वदेशे लभते प्रतिष्ठाम् विद्वांश्च मान्यो भुवने ऽखिलेऽस्मिन् ।
यत्राप्ययं गच्छति तं प्रदेशम् क्षणेन शिष्यं कुरुतेऽज्ञसैव ॥ १६ ॥
क्षणाय येनाथ समागमोऽस्य गुणैस्तमेव स्ववशीकरोति ।
सारस्वतः कोऽप्यनुभावएष पलेन यः प्रह्वयतीह विश्वम् ॥ १७ ॥
धनंजनैर्नाधिगतं न खेदः लब्धा न कीर्ति र्नहि सापि चिन्त्या ।
लब्ध सुबोधोऽपि भवेहिकश्चित् नवेति नित्यं परमं विचिन्त्यम् ॥ १८ ॥
सर्गं स्वकीयं सृजतीह धीमान् नव्यं स्वकीयं कुरुते च नाट्यम् ।
लीलापरः कोऽपि विहारशीलो बुधो जगत्यां विधिरद्वितीयः ॥ १९ ॥
भूतेऽथ भाव्येऽपि च वर्तमाने निरन्तरं सञ्चरते बुधाय ।
विश्वात्मवृत्त्यै विभुदर्शनाय न लीयते किञ्चन लोकलोकात् ॥ २० ॥
परोपदेशाय न केवलोऽयं बाणीविलासः स्फुरतिस्म बाह्यः ।
आभ्यन्तरोऽप्यस्य बभौ तथैव स्वकर्मनिष्ठा नुभवप्रकाशो ॥ २१ ॥
निरीक्ष्य यं कर्मणि नित्यमेवम् शिक्षा स्वयं शिष्यगणैरलम्भि ।
आचारशिक्षैव परा सुशिक्षा कानाम शिक्षा वचनैकदक्षा ॥ २२ ॥
सूर्योदयात् प्राक् कृतनित्यकृत्यः ध्यानालये ध्यानविधिं समाप्य ।
अध्यापयामास ततः स्वशिष्यान् शास्त्राण्यनेकानि महार्थवन्ति ॥ २३ ॥
विश्लेषणं तत् पदवाक्यवृत्तेः रहस्यनिर्देशपरं वचस्तत् ।
वैशद्यहृद्यो विषयप्रकाशः कान्यत्र सा तन्मयता च लभ्या ॥ २४ ॥
शिष्यैः सुखं पाठरसं पिबद्भिः न कांक्षितं किञ्चन सौख्यमन्यत् ।
चुं'कारशून्या चटकापि दृष्टा पाठं पिबन्ती सुसमाहितेव ॥ २५ ॥

ताद्दग् गुरुः संस्कृत संस्कृतात्मा सा संस्कृति र्भारतजन्मभाजाम् ।
रूपञ्च सौम्यं वत सात्विकं तत् गतं क्व सर्वं शुचि जीवनं नः ॥ २६ ॥

विद्यार्थिनां संस्कृतपाठशाला निवासिनामाचरितव्रतानाम् ।
श्लाघ्यास्थितिः सा विनयान्वितानां क्वचाद्य लोके मनुजैर्निरीक्ष्या ॥२७॥

तेजस्विनो रक्षित ब्रह्मचर्याः सर्वेऽपि यस्यां विनय प्रधानाः ।
शिष्या वभूवु र्गुरुभक्तिभाजः धृतव्रता निश्चितसाध्यसिद्ध्यै ॥ २८ ॥

का नाम हा हन्त दशा विहीना किम्वास्तु दुर्दैवमतः परञ्च ।
विद्यार्थिकालेऽपि यदद्य सा नो मते र्विकासस्य गति र्निरुद्धा ॥ २९ ॥

गार्हस्थ्यचिन्ताकुलिताशयानां सर्वस्वनाशि व्यसनावृतानाम् ।
नित्यं गुरोर्निन्दनतत्पराणा हतामति र्दुश्चरितै र्हतानाम् ॥ ३० ॥

अधीतिनः किन्तु पुरा पुराणीं दैनन्दिनीं तामनुवर्तयन्ति ।
पदे पदे यत्र मनः प्रसादो विद्योतते सत्वमयी च वुद्धिः ॥ ३१ ॥

प्रातः समुत्थाय हरिं स्मरन्तः विधाय संध्याध्ययनादि कर्म ।
सूक्तं पठन्तः पुरुषस्य पुण्यम् भुञ्जन्ति मौनं हरये निवेद्य ॥ ३२ ॥

सर्वे पदार्थाः सुलभा भवेऽस्मिन् सौभाग्यवृद्ध्यो विविधस्थलेषु ।
विद्यार्थिवासे सह सद्वयस्यै र्लभ्यं सदा पंक्ति सुखं न किन्तु ॥ ३३ ॥

सा शुद्धपंक्तिः सच मौनभावः तदर्पणं ब्रह्महविः प्रयुक्तम् ।
मेध्यञ्च तत् हृद्यमहो सदन्नम् विश्वम्भरास्ते वलि वैश्वदेवाः ॥ ३४ ॥

स्वास्थ्यस्य सत्यापनमेव यस्मिन् तद्यज्ञशेषामृतमेव साक्षात् ।
सर्वं निलीनं क्वनु कालगर्ते तत् सात्विकं भोजन मद्य शुद्धम् ॥ ३५ ॥

किमद्य लभ्यं वत पक्षिपोतै र्नित्यं हतैर्वा पशुभिर्वराकैः।
विभज्य सर्वानपि यान्नरोऽद्य तृप्तो न भावी भुवने कदाचित् ॥ ३६ ॥
भुक्तेः परं लेख विशेषलग्ना मध्यान्हकाले निजपुस्तकानाम्।
अज्ञासिसु स्तत् हृदयं स्वयंते स्वयञ्च ताश्चित्रकलाः सुरम्याः ॥ ३७ ॥
ततः परागृहे मननप्रवृत्ताः विभावयन्तिस्म समेत्य छात्राः।
अर्थान् नवान् भावविशेषभव्यान् शास्त्रार्थमर्मस्थलमामृशन्तः ॥ ३८ ॥
यदा यदा चैति धृतावकाशा प्रतीक्ष्यमाणा प्रतिपच्चिरेण।
छात्रैः प्रहृष्टैरभिनन्द्यतेस्म सदागताचापि नवागतेव ॥ ३९ ॥
गुरोरनुज्ञामधिगम्य गन्तुम् वहिर्विहाराय विहारिभिस्तैः।
दृष्टानि नानारसभावितानि रथ्यासु तत्तज्जन चेष्टितानि ॥ ४० ॥
सौन्दर्यभारालसगामिनीनां क्वचित् कदाचित् पथि कामिनीनाम्।
व्यलोकि यत्तैरपि हावलीला मनः प्रवृत्तिर्हि विनोदशीला ॥ ४१ ॥
अदृश्यतैर्भिर्न दिदृक्षयापि सौदामिनी चेत्कुहचित्स्फुरन्ती।
रूपप्रभावो वलवान् स्वभावात् स्वतो हरत्येव दृशो न केषाम् ॥ ४२ ॥
स्फीत स्तनीनां घटधारिणीनाम् संदर्शनीये गजकुम्भमर्दे।
दृष्टिर्यदृच्छापतितापि दूरात् जनं विदीर्णं कुरुतेस्म दीनम् ॥ ४३ ॥
भीतोऽपि वेणी बिषसर्पिणीभ्यो निमील्य नेत्रेऽवनताननस्तत्।
छात्रो वराकश्चलतिस्म कष्टं मुहुः कटाक्षोग्रशरै र्विकीर्णः ॥ ४४ ॥
इमां गतिं तस्य विलोक्य दान्तां नार्यश्च काश्चिन्मिथ एवमूचुः।
नायं नरो ह्रीविषयोऽस्मदीयः छात्रो वराकः किल कश्चिदेष ॥ ४५ ॥
सायन्तनी का नच सा सुवेला यस्यां न खेला त्रिविधा वभूवुः।
यस्यां च वृद्धोऽपि नवां नवां स व्यायामरीतिं नहि निर्दिदेश ॥ ४६ ॥

विधीयते साहसजन्म भूमिः युयुत्सुभावस्य न चेत्प्रवृत्तिः ।
नवे वयस्येव विभग्नमध्यः कथं जयेद् द्वंद्वरिपूनधृष्यान् ॥ ४७ ॥

आलस्य दोषैरभिभूयतां नो न निर्बलः कातरतां तनोतु ।
ह्रासश्च जायेत न राष्ट्रशक्ते र्व्यायामशिक्षामिति शिक्षयन्ति ॥ ४८ ॥

मरुस्थली सैकत कोमलाङ्गी विमर्दिता रागवती लुलोके ।
मन्ये शिशिक्षे तत एव चासौ कणे कणे कूर्दनकेलिवृत्तिम् ॥ ४९ ॥

प्रक्रीड्य रम्ये प्रकृतिप्रदेशे, वायुं नवस्फूर्तिकरं निषेव्य ।
ततो निवृत्ता दिवसावसाने सांध्ये विधौ ते निरता बभूवुः ॥ ५० ॥

धन्या हि ते येऽनुभवन्ति नित्यं ध्यानैकताने निजचित्तवृत्तौ ।
बद्धासना विस्मृतबाह्यबोधाः शान्तं स्वरूपं पुरुषोत्तमस्य ॥ ५१ ॥

विधाय संध्यांच समाप्य जाप्यं सर्वेऽपि पूजासदने समेत्य ।
देवाधिदेवस्तुति गीतिमग्ना नृत्यन्ति ढक्कां च निनादयन्ति ॥ ५२ ॥

अहोस कीदृङ् मधुरश्चतारः स्वरो जनानां स्तवने रतानाम् ।
प्रविश्य यः श्रोत्रपथं जनस्य प्रसह्य चेतः कुरुते प्रमत्तम् ॥ ५३ ॥

लीनास्ततोऽन्त्याक्षर काव्यवादे पद्यानि सूत्राणि नचेत्स्मरन्ति ।
विधाय सद्यस्तु नवानि तानि स्मृत्या स्वमेधां सुसमेधयन्ति ॥ ५४ ॥

रात्रौ प्रसुप्तेऽथ गुरौ प्रसुप्ताः प्रभुं स्मरन्तो मधुरस्तवेन ।
ब्राह्मान्मुहूर्ताच्च पुरा प्रबुध्य आवर्तयन् सर्वमधीतिजातम् ॥ ५५ ॥

तेषामेवं सुधीनां सुकृतपथजुषां शास्त्रचिन्तारतानाम् ।
लोकेऽस्मिन् प्रार्थनीयं यमनियमवतां सात्त्विकं जीवनं तत् ।
शान्तं सौम्यं पवित्रं जगति विजयते संस्कृतात् संस्कृतानाम्
यस्मिन् धर्मस्य नित्यं भवदुरितहरी भासते भव्यधारा ॥ ५६ ॥

# हरनामामृते नवमः सर्गः

अथ तत्र सुखेन वाङ् मयाभ्यसनैः संनयतो दिनक्रमम् ।
भयदो मरुदेशदुर्दशास्मरणीयः समयः समागतः ॥ १ ॥
प्रकृते विकृति र्हि मानवै रवगन्तुं सुशका न विस्मितैः ।
अमृतञ्च विषं सहैव या निजगर्भे सततं प्रपुष्यति ॥ २ ॥
अतिदुर्लभमेव सन्ततं सलिलं यत्र मरौ स्वभावतः ।
यदि तत्र विधिर्न वर्षतात् कतमो जीवतु जीवनं विना ॥ ३ ॥
नियतैव परं मरुस्थले वसतिर्दुः समयस्य शाश्वती ।
प्रकृतिर्हि मता जलाल्पता विकृतिर्यत्र च वारिदर्शनम् ॥ ४ ॥
विकला! विहगा हि निश्चलाः कठिनं हा कथमुच्छ्वसन्ति ते ।
विदलस्य तरोरधस्तले रवितापेन भृशं प्रतापिताः ॥ ५ ॥
नहि किन्तु जलस्य विपुषः क्वचिदंशोऽपि समेति दृक्पथम् ।
पथिषु भ्रमतो जलभ्रमैः पथिकान् हन्ति मृगान् मरीचिका ॥ ६ ॥
निपतेद् यदि दृक्पथे क्वचित् मलिना तन्व्यपि तूलसंहतिः ।
जलदस्य कलेति विभ्रमात् तृषितो वारि ततोऽपि याचताम् ॥ ७ ॥
यदि चेह कुतोऽपि धूमिका गगने क्वापि विलोक्यते जनैः
तत एव नवा नवा न का समुदीहा समुदेति मानसे ॥ ८ ॥
न जलं जलजा कृषिः कुतः सुतमूल्यैरपि दुर्लभाः कणाः ।
तरुवल्कलघासभक्षणै रपि पूर्णा न हता दरी ॥ ९ ॥
सदनं सदनं बुभुक्षिता विलपन्तो जठराग्निधुक्षिताः ।
शतशः शिशवोऽपि चुक्रुशुः जननी रोदिति किं करोतु सा ॥ १० ॥

पशवोऽप्यपरे बुभुक्षया गमिता पञ्जरमात्र शेषताम् ।
हठतो हृदये विलोक्य यान् उदिता शापमतिर्विधिम्प्रति ॥ ११ ॥ ❀
सुरभि र्वत कापि विक्लवा विषमेऽस्मिन् समये तृषातुरा ।
विनिमील्य दृशौ पपात यत् करुणामूर्तिमतीव तत्पथे ॥ १२ ॥
विचचाल धृतिर्विलोक्य तां स्थिरता तस्य पलायिता क्वचित् ।
इति चिन्तयतोऽन्वहं मुहुः करणीयं किमु तेन साम्प्रतम् ॥ १३ ॥
नयने खलु मूक जीविनाम् वदतस्ताररवेण वेदनाम् ।
नयने पतितो हि स ध्वनि र्नहि कस्यान्तर्मनो विचालयेत् ॥ १४ ॥
जननी च परा गवा समा ननु का भूतलवर्तिनी भवेत् ।
न नराः खलु तेहि दानवा हतकै र्यैं र्वत सापि पीड्यते ॥ १५ ॥
मनुजो मनुजो भवेत्मनो हृदयं वा नहि तत्र विद्यते ।
अवलोक्य दशामिमां स्वतो नहि यस्य द्रुतिमान्तरं व्रजेत् ॥ १६ ॥
मृदुता करुणार्द्रचेतसः सततं प्रोच्छ्वलति स्वभावतः ।
लभते न पलं क्वचित् सुखं परदुःखैः समुपेद्य येन स ॥ १७ ॥
नहि केवलचिन्तनैः परं जगतो भीतिरियं बिलीयते ।
कुपिता प्रलयाय भीषणं निजरूपं श्रयते यदा यदा ॥ १८ ॥
न धनै र्न च सेनया पुनः नहि विद्याविनयैर्वशीकृता ।
कुटिला प्रकृतिर्हि नीरसा विरमेत कापिनृशंसकर्मतः ॥ १६ ॥
ऋषिभिस्तपसा यथा तथा विजितेऽप्यान्तरसर्गसंग्रहे ।
सहजैव जडा तमोमयी न हि बाह्या प्रकृतिर्निरुध्यते ॥ २० ॥

---

❀ येषाम परमदयनीयामिमां दशां बिलोक्य जनस्य हृदये निष्करुणं विधिम्प्रति हठात् शापमतिः प्रवुद्धाभूत् ।

शिव एव कृपामयः स्वयं नहि यावत् शिवरूपतामियात् ।
जगतो हितकाम्यया चला प्रकृतिः शाम्यति नैव तावता ॥ २१ ॥
इति सोऽथ विमृश्य मानसे सममामन्त्र्य महीसुरांस्ततः ।
समुवाच तपस्विनांवरः सकलांस्तान् श्रुतिशास्त्रपारगान् ॥ २२ ॥
अयि मंत्रदृशो द्विजेश्वराः समयेऽस्मिन्ननु किं विधीयताम् ।
म्रियते निखिलैर्निराशया भुवि जीवैर्विवशैः पिपासया ॥ २३ ॥
समुपेत्य जगत् किमास्यते भवपापैर्यदि दह्यते मही ।
परतापनिवारणक्षमं न मुहुर्ब्राह्मणजन्म लप्स्यते ॥ २४ ॥
नहि विप्रवरैः कदा कदा विहृता दैवकृता विपत्तयः ।
भवभीतिकरी यदा यदा विषमा कालगतिः समुद्गता ॥ २५ ॥
क्रियते निजशक्तिविस्मृतिः किमु भूदेववरैः प्रमादतः ।
क गता भवतां दृढा मतिः नवविश्वोदयकारिणी हि सा ॥ २६ ॥
दृढता यदि मर्त्यमानसे रचना तेन विरच्यते न का ।
सततं हि जनैः शुभक्रिया सुविधेया निजसिद्धिमीप्सुभिः ॥ २७ ॥
विफला च कदा स्तुतिः सतां परमेशे शुचिभावभाविता ।
करुणावरुणालयो हि यः कठिनात्मापि तया प्रसीदति ॥ २८ ॥
विहितैर्विधिना द्विजोत्तमैर्नहि यागैरिह किञ्च सिध्यति ।
विहिताङ्गमही जलप्लुता स्मरणीयं खलुशृङ्ग कर्म तत् ॥ २९ ॥
जनकेन कृते ह्लाध्वरे ननु देवो न ववर्ष तत्र किम् ।
जलदस्य हि यज्ञजन्यता नियतेयं प्रकृतिः सनातनी ॥ ३० ॥
समवेत्य विधीयतां मखो जलधाराभिरथाप्लुतः शिवः ।
क्रियतां कलशैस्तथा यथा जलमात्रं भुवने स पश्यतात् ॥ ३१ ॥

अथ तस्य वचोऽनुमोदकैः शिवभक्तैः श्रुतिपाठतत्परैः ।
शतशः कलशैरहर्निशं पयसा तत्रभवोऽभ्यसिच्यत ॥ ३२ ॥
विगतेषु वहुष्वहःस्वपि प्रबला वातगतिर्न शाम्यति ।
न तथापि निराशतां ययौ विदुषस्तस्य शिवस्थिरं मनः ॥ ३३ ॥
प्रसमीक्ष्य परं जनान् परान् हृदि सन्देहपरान् फलम्प्रति ।
स बुधः शरणं ययौ पुनः पदयोः शुद्धधियाऽशुतोषिणः ॥ ३४ ॥

अयि शङ्कर ! शंकरोऽपि किम्
निजमायां तनुषे भयंकरीम् ।
हर ! संहर रौद्ररूपतां
हर तापं जगताञ्च सत्वरम् ॥ ३५ ॥

मनुजैर्यदि दुष्कृतं कृतं पशुभिः किं किल पापमाहितम् ।
अपि जीवतु ना यथातथा परमेभिः शरणं क लभ्यताम् ॥ ३६ ॥
बिवशैर्हि तवैव मायया क्रियते कर्म शुभाशुभं जनैः ।
शिव तर्हि कथं कठोरता मनुजे चापि भवेद् भवन्मता ॥ ३७ ॥
जगतो ननु का हि सा क्रिया क्वच सा तिष्ठति वस्तुधर्मता ।
भवदेषणयैव याहि नो भवसर्गे भवति प्रवर्तिता ॥ ३८ ॥
विहिता जगतो हिताय या विफला चेद् यदि सा मखक्रिया ।
श्रुतिरेव न हीयते ततो जगतो धर्ममतिर्विलुप्यते ॥ ३९ ॥
गतवत्सर एव मेदिनी खलु दुर्भिक्षहतैव सर्वथा ।
किमु सम्प्रति हन्यते हता शिव याता क्व नु ते दयालुता ॥ ४० ॥
प्रकृति र्वशगा सदास्तु ते भव नित्यं भव भूतये भुवः ।
न पुनः परितप्यतां जगत् समये वर्षतु वारि वारिदः ॥ ४१ ॥

शिवमेवमुपास्य चेतसा प्रगुणान् कर्मणि योजयन् द्विजान् ।
क्षणमेव न शान्तिमाययौ नहि यावत्तु तुतोष शंकरः ॥ ४२ ॥
स्तुतिभिर्मधुराभिरञ्चिता प्रकृतिः सा परिवर्तनोन्मुखी ।
सुकृतैरिव संस्कृतान्तरा जपहोमैरनुभाविताभवत् ॥ ४३ ॥
सहसा विरराम मारुतो गगने वर्णगतिर्गतान्यताम् ।
स्वजनस्य दिदृक्षया स्वयं सलिलेनापि दधे हृदुष्मता ॥ ४४ ॥
शशिशेखरभस्मधूसरा दिवि कैलाशदिशा—समुत्थिता ।
जलदस्य तनीयसी ततिः ददृशे कापि समुत्सुकैर्जनैः ॥ ४५ ॥
स्फुरिता सकृदेव चञ्चला क्षणमेकं मधुर जगर्ज सा ।
ददृशुः परितः परक्षणे परितृप्तां सलिलाप्लुतां महीम् ॥ ४६ ॥
शिशिरः पवनोऽवहन्मुदा प्रियकेकाकलिताश्च केकिनः ।
अभिनव्यमिवाभवद् जगत् स्वभिषिक्तास्तरवो विरेजिरे ॥ ४७ ॥
मुदिता कृतकृत्यतामिता द्विजराजिर्निजविस्मृतिंगता ।
हरकीर्तनगानतत्परा स्तुतिनादैर्भुवनं व्यगुञ्जयत् ॥ ४८ ॥

जयत्यशेष — विश्वताप पाप नाशतत्परः
समग्र दैन्यदुःखदोषदारिशंकरो हरः ॥ ४९ ॥
क्षणेन यस्य पावनैः कृपाकटाक्षवीक्षणैः
समेति सौख्यसन्ततिः प्रवर्तते महोत्सवः ॥ ५० ॥
सुखं सदा सरत्वयं नियन्त्रितो जगत्क्रमः
उदेतु नोद्धता क्वचित् तमःस्वभावता पुनः ॥ ५१ ॥
क्षमादृशैव मृष्यतां भवस्वभावदुष्कृतिः
अहेतुकीत्थमेव ते विधीयतां कृपाततिः ॥ ५२ ॥

पयोधरै रसाप्लुता भवत्वसौ वसुन्धरा

प्रभूत शष्यसम्पदा प्रजा प्रमोदनिर्भरा ॥ ५३ ॥

सुखं वयं यजामहे भवद्वितीर्णवैभवैः

भवन्तमेव भूसुराः सदैव विश्वभूतये ॥ ५४ ॥

त्वदीयपादवन्दनारतं मनो निरन्तरम्

यथाभवेत्तथाधुना च नाथ दीयतां मतिः ॥ ५५ ॥

सकला नगरी च विस्मिता सहसा हर्षभरोल्लसज्जना।

परिवारितयज्ञमण्डपा बहुमानेन ननाम भूसुरान् ॥ ५६ ॥

अधुनापि सदा जलात्यये सुकथेयं तु तथैव गीयते।

नहि वर्षति चेच्च वारिदः सरणिः सैव पुनर्निषेव्यते ॥ ५७ ॥

सिद्धे यज्ञफले तस्मिन् वत्सरे शस्यशालिनि।

तुष्टे जनपदे शास्त्रे श्रद्धा जाता जने जने ॥ ५८ ॥

नानाधर्म्येषु कार्येषु प्रवृत्तेषु गृहे गृहे।

द्रष्टुं पुण्यानि तीर्थानि तुष्यन् सोऽथ मनो दधे ॥५९॥

अथ विबुधवरं तं, तीर्थयात्रां चिकीर्षुम्

सपदि विदितवृत्ता अन्वयुः केऽपि पौराः।

सफलमिह दिनं तद् यत्र संभूय सन्तः

विगत-विविधचिन्तास्तीर्थचर्या श्चरन्ति ॥ ६० ॥

---

इति श्री विद्याधर शास्त्रिप्रणीते हरनामामृते—
मरुदुर्भिक्षदुर्दशाहारिहरप्रार्थनामयोनवमःसर्गःपरिपूर्णः

# हरनामामृते दशमः सर्गः

अहो द्राघीयसी यात्रा मारवी सा भयावहा
दुर्लभं दर्शनं यस्यां शाखिनां सलिलस्य च ॥ १ ॥
शकुनानि परीक्ष्यन्ते पान्थैर्यत्र पदे पदे
" मार्गोऽसौ कुत्र संयाति ,, पृच्छ्यते च पुनः पुनः ॥ २ ॥
गन्तव्यं यत्र सम्भूय सावधानैर्निरन्तरम्
लुण्टाकैः क्वचनाक्रान्तै वर्त्या श्रान्तैश्च कैश्चन ॥ ३ ॥
क्रोशानपि न कर्तव्यं तृषितैर्ग्रासदर्शनम्
निदाघे कीर्यते वन्हिः शिशिरे हिम वर्षणम् ॥ ४ ॥
तस्यामायासबाहुल्यभीषणायामपि क्वचित्
प्रकृत्यैवाध्वगैः कैश्चित् आनन्दोऽप्यनुभूयते ॥ ५ ॥
निशायां शान्तिरम्यायां समे च विषमे पथि
नीरवे निर्जनेऽरण्ये मधुरः स रथध्वनिः ॥ ६ ॥
शनैरध्वानमाक्रम्य गच्छतामुष्ट्रसादिनाम्
लम्बस्वरेण गीता सा मादिनी तेजसः कथा ॥ ७ ॥
यथा प्रातः यथा सायं दृश्यते प्रकृतेश्छटा
कमनीयोषसः कान्तिः सन्ध्या रागवती तथा ॥ ८ ॥
मार्गे मनोविनोदाय श्रमापनयनाय च
हृद्यं गीतं कथालापः ताम्रकं वा निषेव्यते ॥ ९ ॥
क्वचिद् दृष्टिपथं याते कूपस्तूपे धृतिप्रदे
तत्रैत्य पिप्पलच्छायां श्रान्तास्ते सुखमासते ॥ १० ॥

पीत्वा शीतं गृहीत्वा च सलिलं प्रस्थितैः पुनः
मार्गे विश्रम्य विश्रम्य लघुरध्वा विधीयते ॥ ११ ॥
यात्रामेवं प्रकुर्वन्तो ग्राममेकं प्रपेदिरे
काश्या विद्वानिति ग्राम्या जनास्तं पर्यवारयन् ॥ १२ ॥
वर्षे भाविनि किं भावि कीदृशः समयो भवेत्
प्रष्टु मेतत्समाजग्मुः कृषकास्तं समुत्सुकाः ॥ १३ ॥
आवृत्य परितो वन्हि सर्वमेतत् पिपृच्छवः
पप्रच्छुर्विनयात् सर्वे स्वस्व प्रश्नांस्तदामुदा ॥ १४ ॥
किमेतत् सत्यमेवास्ते पण्डिता म्लेच्छतां गताः
नित्यं गावो विहन्यन्ते स्वैरिण्यश्चाभवन् स्त्रियः ॥ १५ ॥
अधर्मस्य प्रवाहोऽयं किं नो ग्रामानपि स्पृशेत्
किं राज्येऽस्मिन् फिरंगाणां सर्वेस्यु र्वर्णसंकराः ॥ १६ ॥
सदाचार परिभ्रष्टाः श्रूयंते नागरा जनाः
अपि सर्वा विनश्येत स्थितिर्धर्म्या पुरातनी ॥ १७ ॥
श्रुत्वा प्रश्नान् परं प्रीतो ऽ ग्रामसारल्यशालिनाम्
अमानी मानदो विद्वान् हसन्नेवं समादधे ॥ १८ ॥
चतुराणाँ धुरीणस्त्वं चौधरीति निगद्यसे
नाश्चर्यं यदिमान् प्रश्नान् निपुणं परिपृच्छसि ॥ १९ ॥
विधर्मिशासनस्यायं प्रभावो राष्ट्रसंस्कृतिम्
दूषयत्येष मूलेन तस्मात् स्थेयं समाहितैः ॥ २० ॥

रुधिरेण गवां यैस्तु दूषिता भारती धरा
यावत्तेषां न निष्कासः तावदत्र कुतः सुखम् ॥ २१ ॥
क्षीयते वर्णधर्मोऽद्य वर्धन्ते वर्णसंकराः
म्लेच्छशिक्षाप्रसारेण शास्त्रानभ्यसनेन च ॥ २२ ॥
परं पुण्यतमे वर्षे भारतेऽस्मिन् सनातनः
धर्म एव सदास्थायी सर्वमन्यद् विनंक्ष्यति ॥ २३ ॥
केचित् संसर्गदोषेण विप्राश्चेद् धर्मतश्च्युताः
नहि तेन च्युताः सर्वे व्यक्त्या जातिर्न दूष्यते ॥ २४ ॥
त्यक्त भारतमर्यादा या स्त्री स्वच्छंदचारिणी
आहृतिर्भारते तस्या न भूता न भविष्यति ॥ २५ ॥
परिवर्तनसम्पन्नं सदा पत्तनजीवनम्
चंचलं बुद्धिवादेन श्रद्धाहीनं च विकृतम् ॥ २६ ॥
स्वात्मा भारतवर्षस्य ग्रामेष्वेव विराजते
संरक्ष्यः पत्तनाचारै यथा तैर्न विदूष्यते ॥ २७ ॥
ग्रामे तपोवने चैव भेदः कश्चिन्न विद्यते
विधेयं नित्यमातिथ्यं गावो रक्ष्या गृहे गृहे ॥ २८ ॥
रक्ष्या भगवति श्रद्धा रक्ष्या प्रीतिः परस्परम्
सर्वैकर्माणि संभूय कर्त्तव्यानि गतक्लमैः ॥ २९ ॥
अद्य यावत् पथा येन युष्मच्छ्रेयो व्यवर्धत
त्यज्यते चेन्न पन्था स शांति र्ग्रामे सदा स्थिरा ॥ ३० ॥
तस्यैतद् वचनं श्रुत्वा यथार्थं धर्मसम्मतम्
पप्रच्छुस्ते पुनः प्रीता दशां वर्षस्य भाविनीम् ॥ ३१ ॥

सोऽपि सर्वान् समाधाय प्रश्नांस्तेषां तथा तथा
प्रातरेव समुत्थाय प्रतस्थेऽनुदिते रवौ ॥ ३२ ॥
गत्वा च कतिचित् क्रोशान् ग्रामाद्दूरे वनाध्वनि
सहसा तिष्ठतिष्ठेति शुश्रुवे कर्कशध्वनिम् ॥ ३३ ॥
सम्मुखं धावमानांश्च लम्बग्रीवान् क्रमेलकान्
दृष्ट्वा पप्रच्छ निर्भीकः शंकरं रथवाहकम् ॥ ३४ ॥
"किमेतत् क इमे लोकाः किं वा वाञ्छन्ति पृच्छ्यताम्,"
"मौनं स्थैर्यं महाराज! नियन्त्रैवं न्यषिध्यत ॥ ३५ ॥
भवन्तो नैव जानन्ति वेद्मि दस्यूनिमानहम्
अहमेव समाधास्ये प्रश्नानेषां दुरात्मनाम् ॥ ३६ ॥
ततस्तानाह भो वीराः! धार्मिकाः पण्डिता इमे
गम्यते तीर्थयात्रायां नैभ्यः कोऽपि धनागमः ॥ ३७ ॥
यूयं शुश्रूषवश्चेत्स्थ श्रूयतां धार्मिकी कथा
धर्माणामुपदेशो हि विज्ञानां शाश्वतं धनम् ॥ ३८ ॥
अनादृत्यैव तद्वाक्यं प्रोचुस्ते निष्ठुरं खलाः
आस्तां ते धर्मचर्चेयं क्षिप्रमाख्याहि यद्भवेत् ॥ ३९ ॥
तेषामेतद्वचः श्रुत्वा समागत्य रथाद्बहिः
प्राह गंभीरया वाचा गृह्यतां गृह्यते हि यत् ॥ ४० ॥
निर्भयं तद्वचः श्रुत्वा दृष्ट्वा ताञ्च द्विजाकृतिम्
सौम्यां तेजस्विनीं तेऽथ श्रद्धानम्रा अवातरन् ॥ ४१ ॥
निपत्य पादयोः प्राहुः क्षत्रियाः स्मो वयं द्विजान्
नैव हन्मो न लुण्ठामः धनिकान् मृगयामहे ॥ ४२ ॥

क्रूरानपि धृताचारान् तान्प्रत्याह प्रबोधयन्
क्षत्रियैरपि युष्माभिः किमेषा वृत्तिराश्रिता ॥ ४३ ॥
क्षताद्रक्षा प्रकर्तव्या कर्तव्यं राष्ट्ररक्षणम्
क्षत्रियाणामयं धर्मः गर्हिता दस्युवृत्तिता ॥ ४४ ॥
सर्वमेतत् यथा प्रोक्तं तत्तथा किन्तु साम्प्रतम्
ब्राह्मणा ब्राह्मणा नैव क्षत्रियाः क्षत्रियास्तथा ॥ ४५ ॥
कुर्महे किं महाराज सर्वं जानीमहे वयम्
सर्वं पापमपापञ्च जुहुमो जठरानले ॥ ४६ ॥
तावदेव हि धर्मस्य मार्गः समनुगम्यते
लोके जीवन वृत्तिर्हि नृणां यावन्न रुध्यते ॥ ४७ ॥
आहरन्ति च ये वित्तं कृपणाः कैतवार्जनात्
हरामश्चेत्ततः किञ्चित् पश्यामो नात्र गर्हणम् ॥ ४८ ॥
आपणे येहि लुण्ठन्ति लुण्ठामस्तान् वयं वने
आदानस्य प्रदानस्य नित्येयं जागती स्थितिः ॥ ४९ ॥
यत् किञ्चित् शक्यते कर्तुं क्रियते तन्निरन्तरम्
दीनेभ्यो दीयते द्रव्यं रक्ष्यन्ते धेनवस्तथा ॥ ५० ॥
नातिक्रमोऽस्तु वेलाया भवान् यातु यथासुखम्
वयमपि च गच्छामो मार्गोऽस्माकं पृथक् पृथक् ॥ ५१ ॥
उष्ट्रानारुह्य यातेषु तेषु सोऽपि विदाम्बरः
क्षत्रियाणां गतिः केयं चिन्तयन् प्रस्थितः पुरः ॥ ५२ ॥
मरुमेवं समुत्तीर्य सम्प्राप्तो व्रजमण्डलम्
दर्शनैः कीर्तनैः प्रीतः प्रतस्थे सेतुबन्धनम् ॥ ५३ ॥

अथ तां दक्षिणामाशां जगाहे स विचक्षणः
यत्राचार्यैः परंब्रह्म स्वहस्तामलकी कृतम् ॥ ५४ ॥
अरण्ये कृतावासा विन्ध्याचलतपस्विनी
नर्मदा प्राभवत्तस्मै प्रस्नुतेव पयस्विनी ॥ ५५ ॥
रामेश्वरे कृतातिथ्यो दाक्षिणात्यैर्विदाम्बरैः
सर्वाधिकारसम्पन्नं चक्रे तत्र शिवार्चनम् ॥ ५६ ॥
परिपूतमिवात्मानं कृतार्थः सन्नमन्यत
अन्येऽप्यस्यानुगाश्चैवं निर्वृतिं लेभिरे पराम् ॥ ५७ ॥
महिमातिशयः कोऽपि स्थितः तीर्थेषु शाश्वतः
यदाकर्षति चेतांसि यतीनां गृहिणामपि ॥ ५८ ॥
यल्लोभाद् दीनहीनोऽपि सार्थमावध्य पर्यटन्
राष्ट्रैक्यं स्थापयन्नित्यं पुनीतेऽखिलभूतलम् ॥ ५९ ॥
यत्तु किंचित् क्वचिद्रम्यं प्रकृतिर्यत्र सात्विकी
दुर्गमं साहसापेक्षि स्थलं वा यत्र पावनम् ॥ ६० ॥
यत्र स्रोतांसि पुण्यानि सर्वरोगहराणि च
तत्रैव तीर्थसद्बुद्धि भारतीया सनातनी ॥ ६१ ॥
युवानोऽद्य प्रशस्यन्ते पर्वताग्रेषु रोहणात्
पुराह्यत्र जरन्तोऽपि दुर्गं कैलाशमाविशन् ॥ ६२ ॥
एवं सर्वेषु तीर्थेषु यजन् मज्जंश्च तर्पयन्
सम्पन्नोऽनुभवैर्दिव्यैः कृतार्थः सन्न्यवर्तत ॥ ६३ ॥

दर्शं दर्शं भुवनविदितां भारतीं पुण्यभूमीम्
तीर्थीभूतः स धरणिसुरः सेव्यमानो महद्भिः

आजं याजं सुविहितमखैस्तत्र देवद्विजातीन्
दिव्यैः शिष्यैः पुरमपि निजं चारु तीर्थीचकार ॥ ६५ ॥

—:o:—

# एकादशः सर्गः

शान्तोऽप्यशान्ताज्जगतो मनस्वी कौबेर काशीं बहुधा जगाम ।
गुहागतः कश्चन यत्र सिद्धः प्रबोधयामास बुधं तमित्थम् ॥ १ ॥
बुद्ध्वापि तद् यद् विबुधैर्विबोध्यं लब्ध्वा च तद्यत्परतो न लभ्यम् ।
किं यापयन् व्यर्थ महो स्वकालम् नैवात्मनः कृन्तसि विश्वपाशम् ॥ २ ॥
लभ्यंहि नेदं नरजन्म नित्यं स्थेयं सदा नैव च मर्त्यलोके ।
कर्माणि कार्याणि सदैव नूनं गृहाश्रमात् किन्तु पराण्यपीह ॥ ३ ॥
श्रुत्वा तदीयं वचनं हितं तत् विचिन्त्य संसारगतिं तद्वत् ।
नवाय सज्जः परिवर्तनाय मनो दधेऽरण्य निषेवणाय ॥ ४ ॥
आहूय सद्यः स्वसुतं विदेशात् षट्शास्त्रबोधप्रतिभासमृद्धम् ।
समग्रलोकव्यवहारदक्षं देवीप्रसादं स इदं बभाषे ॥ ५ ॥
तत्रैव दुर्गाचरणाब्जभृङ्गो भ्राता कनिष्ठो मदनाभिधानः ।
अहेतु सर्वोपकृतौ प्रवृत्तः पार्श्वे समाकर्णयति स्म सर्वम् ॥ ६ ॥
"धनाश्रिता यद्यपि लोकयात्रा तदर्जनं तत् सुविधेयमेव ।
विद्योतते किन्तु गृहं बुधानां विद्याधनैरेव नचान्यरत्नैः ॥ ७ ॥
उपार्जितं तन्न वितीर्यते चेत् कारानिबद्धं शपते द्विजं तत् ।
प्राप्रेऽपिविद्याविभवे च कोऽर्थो विद्वत्सु चेद् भाति न कीर्तिकांतिः ॥ ८ ॥
स्वसन्ततिश्चाथ न शिक्षिता चेत् धनार्जने भग्नधियैव पुंसा ।
किमर्जितं मूढ़धिया हि तेन बिनाश्य रत्नानि बराटकेन ॥ ९ ॥

त्यक्त्वा धनाप्तेर्व्यवसायबुद्धिं वृणीष्व तद् बुद्धिपथं बुधानाम्।
परोपकारेण निजोपकारो विश्वोपकारश्च सदा विधेयः ॥ १० ॥
तद्योग्ययो र्न्यस्य गृहस्थभारं स्वयं तृतीयाश्रममाश्रयिष्ये।
शनैः शनैर्यत्र मुनिव्रतानां स्वकर्मबंधः स्वयमेति मुक्तिम् ॥ ११ ॥
जपैरनेकैर्व्रतयज्ञहोमैर्योगेन वा सत् श्रुतिभिः श्रुतैश्च।
समर्ज्यते यत् सुकृतं गृहेषु निपीयते तस्य रसो वनान्ते ॥ १२ ॥
गृहस्थधर्मं परिपालयद्भिः प्रवृत्तिमार्गो धृयते प्रकृत्या।
सुखं निवृत्तेरपि तैर्निषेव्यं मता निवृत्तिः परमा प्रवृत्तिः ॥ १३ ॥
तत्रापि कर्माणि न सन्ति कानि परोपकारैः सविशेषवन्ति।
यस्यां समस्मिन् निजबन्धु बुद्धिः स्वस्मिन् परे वा न भिदामुपैति ॥ १४ ॥
स्थितैर्निवृत्तावनुभूयते या सर्वात्मभावैक रसानुभूतिः।
संसारसिन्धोः प्रबलैस्तरङ्गैरालोडितैः सा सुलभा क लोकैः ॥ १५ ॥
गृहस्य कोणे क्वचिदादृतानां श्वासेन कासेन विनिद्रितानाम्।
किं जीवनं हन्त जरावृतानाम् रोगैर्वियोगै रुदतां सदैव ॥ १६ ॥
नाहं निबद्धो गृहबन्धनेन यूयं च लोके व्यवहारदक्षाः।
सैषा कृपा कारुणिकस्य शंभो र्विद्वद्गृहं मुक्तिफलैकहेतु ॥ १७ ॥
इत्येवमाभाष्य स भाष्यभानुः मौनं सुताभ्यां विदितागमाभ्याम्।
अङ्गीकृतार्थोऽमरसिंधुतीरं निषेवितुं प्रीतमना बभूव ॥ १८ ॥
धन्यो गृहस्थः किल सोऽस्ति लोके गृहं त्यजेद्यो गृहभारमुक्तः।
न तैलिकानां वृषभैः समानः चक्रे चलन्नेव विपद्यते च ॥ १९ ॥
धन्यानि राष्ट्रस्य दिनानि तानि वनेषु वासं स्पृहयन्ति येषु।
चितासु दग्धेऽपि गृहस्थचिंता प्रवर्धमानेव न दह्यतेऽद्य ॥ २० ॥

जनोऽद्य विस्मारितविश्वरूपो नियन्त्रितः केन गृहे निरुद्धः ?
हेतोश्च कस्माद् विवशी कृतोऽयं गृहात्परं पारयते न गन्तुम् ॥ २१ ॥
बध्नन्ति तं भोगसुखानि किम्वा नित्यं कलत्रात्मजपोषणेहा ।
समाजदोषा उत धर्महीना भ्रष्टाद्य सर्वा मनुजस्य नीतिः ॥ २२ ॥
किं जीवनं जातमिदं जनानां प्रतिक्षणं चिन्तितचेतसां नः ।
येषामभावस्य न कापि पूर्तिः तुष्टिश्च भाग्ये लिखिता न येषाम् ॥ २३ ॥
इयं यथा गेहगतिस्थितिर्नः क्षीयेत सद्यो भवजन्मभाजाम् ।
तथा प्रयत्नः सकलैर्विधेयो नातः परं सह्यमिदं च मौनैः ॥ २४ ॥
" भाव्येन भाव्यम् नहि जातु कश्चित् तदन्यथाकर्तुमिह प्रभुःस्यात् ।
धृतव्रतानामिह चित्तवृत्तौ कदाप्युदेत्येष न दीनभावः ॥ २५ ॥
क्षणेन सर्वं सुलभं जगत्यां क्वेच्छा जिगीषो रवरोधमेति ।
अग्रेसरैर्भाव्यमतो महद्भि र्विधूय विघ्नानि मनोबलेन ॥ २६ ॥
स्वार्थस्य सिद्ध्यै धृतभूरिवेषो न कोऽपि नेता पथदर्शको नः
निःश्रेयसाय स्वयमेव तस्मात् सुधीः स्वमार्गं वृणुयात् स्वतन्त्रम् ॥ २७ ॥
मदीयमार्गश्च स एव मार्गो यो भारतीयैः प्रथितः पुराणैः ।
आर्यैश्चतुर्धा क्रमबद्धमार्गैं क्रमाच्चलन्नेव समेति लक्ष्यम् ॥ २८ ॥
सुरापगाया रमणीयतीरे कुले ऋषीणां वसतिं विधातुम् ।
स विज्ञवर्यो हरनामदत्तः ययौ हरद्वारमतो वदान्यः ॥ २९ ॥
ज्वालापुरस्थेऽपि महाप्रशांते विद्यालये वा नरदेववर्यैः ।
सम्प्रार्थितः शास्त्रिवरै र्वदान्यै र्भाष्यामृतं विज्ञवरो ववर्ष ॥ ३० ॥
साक्षात् कृतार्थै भुवनस्य धर्माः शान्तिश्च येषां मनसि स्वभावात् ।
सन्यासिनस्तत्वविवित्सया ते मुमुक्षवोऽप्यस्य जहुर्न पार्श्वम् ॥ ३१ ॥

तं शुद्धबोधः स्वयमेव तस्मिन् सविग्रहः सन्ततमाशिषेवे ।
शास्त्रार्थ चर्चा निरतस्य तस्य कालः स कस्येह न बन्दनीयः ॥ ३२ ॥
धन्या स्मृति स्ततसमयस्य पुण्या तत्वार्थमालोचनतत्पराणाम् ।
प्रतिक्षणं यत्र विचारवीचो मथ्नाति नित्यं नवनीतमर्थम् ॥ ३३ ॥
प्रतीपगा एव बहन्ति धारा विधिश्च भिन्नः सुधियां हि येषाम् ।
समेत्य ते तत्र महासमुद्रे एकार्थतायामभवन् कृतार्थाः ॥ ३४ ॥
श्रुत्वा विसम्बाद विचारचर्चा मध्येस्थितोऽयं विहसन् तटस्थः
नानाश्रयाणां स्वरमूर्छनानां साम्यं मनोहारि चकार नित्यम् ॥ ३५ ॥
सिद्धाश्रमे तस्य पुनीतवासे एषैव चर्चा सततं चचाल
" किं ब्रह्म शब्दस्य च किं स्वरूपं कथं जनानां सफलञ्च जन्म ॥ ३६ ॥
कि जीवनं कुत्र वयं भ्रमामः कथं च लोके प्रगतिर्विधेया ।
योऽयं प्रपञ्चः प्रततः समन्तात् केनप्रकारेण निरष्य एष ॥ ३७ ॥
अद्वैतसिद्धान्तपथानुयायी तस्यैव नित्यं परिपोषक श्च ।
विशुद्धमानन्दमयं यतीशम् निजं गुरुं भासयतेतरांस ॥ ३८ ॥
नित्यंस्थितः सन्नपि सर्गसन्धौ सदैव बब्रे स विसर्गसन्धिम् ।
स्वरेण नित्येन च सन्धिमिच्छन् न व्यञ्जनैः सन्धिमसौ जगाम ॥३६॥
कचिद् विविक्ते गिरिपार्श्वदेशे गंगातटे वा स्थिर चित्तवृत्तिः ।
निनाय कालं स सुखेन शान्तो भ्रमन् प्रदेशेषु सुखं गिरीणाम् ॥ ४० ॥
सौन्दर्य राशेश्च विभीषिकायाः सहैव येषां वसतः शरीरे ।
ये दूषिता हिंसकवृत्तिवासै रपि प्रियाः सन्ति मुनीश्वराणम् ॥ ४१ ॥
नोष्मा कदाचित शिरसीह येषां ये चासमाश्चापि सुधीरधुर्याः
येभ्यश्च पाषाणकठोरहृद्भ्यः स्वच्छाः सदा सत्सरितो बहन्ति ॥ ४२ ॥

नक्षत्रमालाः सततं नवीनं स्कन्धेषु हारं रमणीयतायाः ।
प्रतिक्षणं यत्र च यामिनीषु रम्यासु संधापयते प्रसन्नाः ॥ ४३ ॥
छाया तरूणां शिशिरा क्वचित्र क्वचिन्नदीनां मृदुसैकतञ्च ।
क्वचित् प्रियः शीकरशीतवायुः क्वचित्गिरीणां शिखराधिरोहः ॥ ४४ ॥
एवं स वाग्मी विहरन् स्थलीषु स्वभावरम्यासु सह स्वशिष्यैः ।
निरीक्षमाणो रचनां विधातुः गुणेन रम्यामिह निर्गुणस्य ॥ ४५ ॥
पदे पदे तेन पदं नवीनं कथा च काचित् कथिता नवीना ।
तत्तत्स्थलानामितिहास चर्चाः संश्राविताः सच्चरितैरुदाराः ॥ ४६ ॥
मुखेऽवनद्धा रजतेन यष्टिः करे परस्मिंश्च सवारि पात्रम् ।
विभूषयामासतुरस्य हस्ता वाचारपूतस्य सदैव तस्य ॥ ४७ ॥

हृदयसरसिजं विकासयन् सन्
दिशिदिशि मौर्ख्यमयं तमो निरस्यन्
सुकृतपथि नियोजयन् समस्तान्
रविरिव विज्ञवरश्चलन् बभासे ॥

:o:

# हरनामामृते द्वादशः सर्गः

सौम्ये सुरसरित्तीरे तस्मिन्नेवं विहारिणि
आसीने ध्यानमग्ने वा शान्ते सिद्धाश्रमे सुखम् ॥ १ ॥
दुर्गापाठरते मौनं तद्वाच्छास्त्रानुशीलने
विद्वद्गोष्ठीपरे प्रीते शिष्यवर्गानुशिक्षणे ॥ २ ॥
युगेऽस्मिन्नपि निःसत्त्वे परिपूर्णे कुबुद्धिभिः
सत्यज्ञान - तपोदान - श्रद्धा - सत्कर्मशत्रुभिः ॥ ३ ॥

स्वातन्त्र्यमन्त्रघोषेण पारतन्त्र्यप्रपोषिभिः
वाग्वीरैर्मञ्चशूरैर्वा मिथ्याचारविहारिभिः ॥ ४ ॥
नित्यमन्तस्तमोलीनै र्बहिर्विद्युद्विमोहितैः
निःसारै र्दिक्षु सर्वासु निर्मूलैः सर्वतोगतैः ॥ ५ ॥
कलौकाले महाघोरे सर्वसंस्कारवर्जिते
ज्ञानार्करश्मिसंरोधिरजोभिः सर्वतो वृते ॥ ६ ॥
सपदि तत्र संहृष्टा भूयः संस्कृतसंस्कृतिः
अर्याणाञ्च परंदिव्यं प्रदीप्तं तन्महन्महः ॥ ७ ॥
महर्षीणां तपोभूमे र्जातं साक्षात्सुदर्शनम्
निन्दिता कृत्रिमावृत्ति र्धार्मिकी च समादृता ॥ ८ ॥
यज्ञधूमैः पुनःसर्वं पावितं भावितं नभः
देवाः सर्वेऽपि सन्तुष्टाः सर्वे लोकाश्च संस्कृताः ॥ ९ ॥
स्वाध्यायाभ्याससंलीनै र्गुरुसेवापरायणैः
तत्तत्क्रीड़ापरैः कामं लेखव्याख्यानवैभवैः ॥ १० ॥
व्यायामपुष्टसर्वाङ्गैः साङ्गवेदानुशीलिभिः
स्निग्धैर्मुग्धै र्विनम्रैश्च समेते ब्रह्मचारिभिः ॥ ११ ॥
सदाचार सदाधार ज्ञान तेजो विभासुरैः
प्रख्यातैश्च बुधैः पूर्णे साक्षात्कृतपरात्परैः ॥ १२ ॥
गंगातरगसंगीते वेदध्वनिनिनादिते
घृतेन पयसा तृप्ते हविर्गन्धैः सुगन्धिते ॥ १३ ॥
नानाखगमृगाकीर्णे नानारामैर्विभूषिते
घनैर्वनैः समाच्छन्ने पर्वतैः परिवेष्ठिते ॥ १४ ॥

आर्षे कुले सरित्कूले महाविद्यालये पुनः
पुण्ये कनखले भव्ये नव्ये गुरुकुले तथा ॥ १५ ॥
विदुषां ज्ञानतीर्थानां श्रेण्यस्ता विराजिरे
ब्रह्मलोकं परित्यज्य सस्नौ यत्र सरस्वती ॥ १६ ॥
त्रिपुर्याः कोऽपि कालोऽयं शिक्षातारुण्यसूचकः
ननृतु र्यत्र गंगाया स्तरङ्गैर्ज्ञानवीचयः ॥ १७ ॥
मान्या गिरिधरास्तेषु नानाशास्त्रधुरंधराः
चातुर्वर्ण्यस्य धर्मस्य प्रत्यक्षं दिव्यमूर्तयः ॥ १८ ॥
दृष्टिर्नव्या प्रदत्ता यै र्दर्शनाल्लोकहेतवे
रक्षायै संस्कृतेर्नित्यं कटिबद्धाश्च ये सदा ॥ १९ ॥
साहित्यदर्पणादर्शाः शलग्राममहोदयाः
विद्वद्वरेषु विख्याताः टीकया विमलाख्यया ॥ २० ॥
प्रसिद्धा अद्य नेतारः श्री कालेलकरा अपि
तत्रैवासंस्तदा तेषु विद्वगोष्ठीविशारदाः ॥ २१ ॥
सिद्धा व्याकृतिसंसारे मान्या लक्ष्मणशास्त्रिणः
वेदज्ञाः पन्तवर्याश्च दुर्गादत्तमहोदयाः ॥ २२ ॥
कापिलैः पुरुषैस्तुल्या बालरामा उदासिनः
ज्ञानदीप्ता अभासन्त प्रशान्ते गुरुमण्डले ॥ २३ ॥
बभुर्ज्वालापुरे तद्वद् दर्शनानन्दमानिनः
तेजस्विनो महात्मानः शुद्ध बोधाश्च योगिनः ॥ २४ ॥
स्वाध्यायामृतपानाय यावज्जीवं धृतव्रताः
वेदवेदांगतत्वज्ञा नरदेवाश्च शास्त्रिणः ॥ २५ ॥

साहित्य कानने नित्यं स्वैरं गर्जनतत्पराः
समालोचकपञ्चास्याः पद्मसिंहमहोदयाः ॥ २६ ॥

विज्ञा गुरुकुलेऽध्यासन् सर्वशास्त्रदिवाकराः
काशीनाथा महाभागा विद्वत्पूज्याःसता मताः ॥ २७ ॥

✓श्रद्धानन्देति च ख्याता मुंसीराममहोदयाः
सद्धर्महुतसर्वस्वा निर्भीका ज्ञानदीपकाः ॥ २८ ॥

✓विद्यालङ्कारसम्पन्ना इन्द्रप्रभृतयो बुधाः
लेखका वाग्मिनो नाना नवान्वेषणतत्पराः ॥ २६ ॥

दैवादेवम्विधास्तेते छात्रा अपि तदाऽभवन्
उज्ज्वलानीव रत्नानि भान्ति ये ऽद्यापि भारते ॥ ३० ॥

अद्याप्याशास्यमानैव चर्चा चेत् कापि संसृतौ
श्रूयते सुरभारत्याः तेषामेव हि तत्फलम् ॥ ३१ ॥

पूज्या गुरुकुलाचार्या वृन्दावन विहारिणः
द्विजेन्द्रा मयराष्ट्रस्थाः शास्त्रालोक विभासुराः ॥ ३२ ॥

सांख्यसत्वप्रकाशेन तमोविध्वंसने रताः
उदयवीर-सन्नाम्ना राजमानाः सभास्थले ॥ ३३ ॥

निमज्ज्योन्मज्ज्य शास्त्राब्धौ सन्ततं यः प्रहृष्यति
प्रसन्नवदनो वाग्मी दर्शनेन सुदर्शनः ॥ ३४ ॥

श्री परमेश्वरानन्दः - उपाध्यायो महान् महान्
षडम्बुं कुरुते यस्य पञ्चाम्बुं शिष्यवाहिनी ॥ ३५ ॥

लीलाधरो महाभागो नानाशास्त्र—विचक्षणः
कर्मठो ध्यान संलीनो धर्म व्याख्यान भास्करः ॥ ३६ ॥

मनस्वी परमानन्दः सत्कवीनां विनोदभाक्
माधवो रामदत्ताश्च प्रसिद्धौ काव्यसंसृतौ ॥ ३७ ॥
नित्यं शास्त्ररसे मग्ना लेखकाः प्रेमवल्लभाः
सुर्वज्ञा इन्द्रदेवाश्च साहित्यामृतवर्षकाः ॥ ३८ ॥
सर्वैरेभिर्महाभागै रन्यैश्च नरपुंगवैः
तत्तद्देशसमायातै र्नित्यं विद्वद्भिरादृते ॥ ३९ ॥
प्राचीनेऽपि नवीनानां भक्तिस्तस्मिन् बलादभूत्
पूजार्हो लभते पूजां यत्र कुत्रापि संविशन् ॥ ४० ॥
नित्यं शास्त्ररसं नव्यं वाणी तस्याभ्यवर्षत
यं निपीयाप्यलं विद्वान् पातुमैच्छत् पुनः पुनः ॥ ४१ ॥
रसस्य 'तस्य लोभेन सारस्वततटाश्रिता
मुहुः सम्प्रार्थ्य निन्युस्तं महामान्यं स्थले स्वके ॥ ४२ ॥
कुरुक्षेत्रे महाक्षेत्रे शौर्यज्ञानसमुज्ज्वले
धर्मार्थोत्सृष्टवीरासृग् रक्तपङ्कज संकुले ॥ ४३ ॥
धर्मराज्याय वीराणां यत्र हुत्वाप्यसून् सताम्
लोकस्थितावधर्मस्य प्रसारोऽद्यापि नो हतः ॥ ४४ ॥
यस्मिन् किन्तु समुदभूतं गीतं तन्महदद्भुतम्
लध्वीमपि तनुं बिभ्रद् नरो यस्मादभूद् विराट् ॥ ४५ ॥
प्रवुद्धा यस्य गानेन सुप्ता सर्वापि संसृतिः
अज्ञानध्वान्तसंरुद्धो ज्ञानमार्गश्च शोधितः ॥ ४६ ॥
अच्छेद्यत्वमभेद्यत्वं यतो मर्त्योऽपि विन्दति
ध्रुवां कीर्तिं विभूतिञ्च जिगीषुरधिगच्छति ॥ ४७ ॥

शाश्वतो यत्र सन्देशस्त्रिकाले चाव्यया मतिः
गति र्यत्रच सर्वापि स्खलद्दयाधायिनीसदा ॥ ४८ ॥
यत्रास्ते सवधर्माणां दर्शनानाञ्च पूर्णता
नवोत्साहो नवा स्फूर्ति र्जीवनञ्च पदेपदे ॥ ४६ ॥
यत्र चानुपमा काचिद् वहति त्रितटा नदी ❀
निमज्ज्यैव नरो यस्यां संसाराब्धिं तितीर्षति ॥ ५० ॥
तीर्थे यत्र च हर्षस्य साम्राज्ये धर्मरक्षिणः
युगपद्विश्वविज्ञात्री वाणी बाणस्य गुञ्जिता ॥ ५१ ॥
यत्र सर्वान्तकृत् कालश्चार्याणां भाग्यमग्रसत्
कृतो यदुरुभंगेन भंगो राष्ट्रकूटैरपि ॥ ५२ ॥
तस्मिन्नैवेतिवृत्तस्य स्मारके भारताङ्गणे
भारताद्खिलाद् गौडा ब्राह्मणा धर्ममूर्तयः ॥ ५३ ॥
नव्याः प्राच्याश्च संभूता विद्यावन्तो यशस्विनः
ब्रह्मतेजोभिरादीप्ताः प्रातः पूज्यास्तपस्विनः ॥ ५४ ॥
विद्याकोषस्य सम्वृद्ध्यै श्रेयसेऽभ्युदयायच
समुद्धाराय चातीतगौरवास्पदपद्धतेः ॥ ५५ ॥
तत्रासीत् स्वागताध्यक्षः सर्वशास्त्रशिरोमणिः
प्रख्यातो धीरधौरेयःसाक्षात् श्रीगरुड़ध्वजः ॥ ५६ ॥
प्रधानासनदानेन सभ्यैरेभिः कृतादरः
शंकरं हृदि निध्याय विधाय द्विजवन्दनाम् ॥ ५७ ॥
स्थापयन् श्रौतसिद्धान्तं पंथानं दर्शयन् सताम्
चूर्णयन् कैतवीं नीतिं भ्रान्तिमुत्सारयन् नृणाम् ॥ ५८ ॥

❀ ज्ञानकर्मोपासनातटावृता

वर्णाश्रमस्य धर्मस्य रहस्यमनुवर्णयन्
सञ्चारयन् नवोत्साहं पथभ्रष्टान् नयन् पथि ॥ ५९ ॥

जातिम्बा सम्प्रदायम्बा नैकमुद्दिश्य केवलम्
उदारां वाचमाचख्यौ रक्षन् विश्वहितां दृशम् ॥ ६० ॥

सदसि तद् गदितं वचनामृतम्
सहृदयै रवधाय निपीयताम् ।
तदनुदर्शित भारत संस्कृतेः
प्रतिजनं रस एष च सिच्यताम् ॥ ६१ ॥

---

# हरनामामृते त्रयोदशः सर्गः

पूज्या जगत्तत्त्वविबोधहेतवः
संसारसिंधोस्तरणादिसेतवः ।
विश्वात्मसन्तर्पणदत्तचेतसः
नमोऽस्तु वो दीप्तपवित्रतेजसः ॥ १ ॥

नमोऽस्तु वो भूतलभूषणेभ्यो नमोऽस्तु वो भारतभूसुरेभ्यः
नमोऽस्तु वो न्यक्कृतदुष्कृतेभ्यो नमोऽस्तुवः संस्कृतजीवनेभ्यः ॥ २ ॥

कथं हि कश्चिदभवतां सभायाः सभापतिः स्यान्नतु मादृशोऽपि
दिवाकराणामुदयाचलेऽपि खद्योतपोतः किमुपेतु कान्तिम् ॥ ३ ॥

प्रभाकरायापि निधीयतेचेद् पूजाविधाने यदि कोऽपि दीपः
नाहं हि सोऽप्यस्मि चलप्रकाशः मन्दोऽस्मि तैस्तै जगतीप्रवातैः ॥ ४ ॥
क्षम्या हि तस्माद् विवशा स्थितिर्मे क्षमाधरै र्विप्रवरैः सुधीरैः
अभीप्सितार्थं – स्थिरसिद्धि – सिद्धै यूसर्वत्रसंदत्तनिजावलम्बैः ॥ ५ ॥

किं नामाभिनवं किञ्चिद् वच्मि तेषाञ्च सम्मुखे
लोकेऽस्मिन् ये स्वयंसिद्धा ज्ञानविज्ञानहेतवः ॥ ६ ॥
अशान्ता जगती शान्ता कृता शान्तिमयैश्च यैः
त्रिविधं च जगद् :खं क्षणेनैवापसारितम् ॥ ७ ॥
यानि कान्यपि शास्त्राणि राजनीतिश्च निर्मला
धर्मशास्त्रं च यत्पुण्यं तत्तेषां तपसः फलम् । ८ ॥
आलोकितं जगत्सर्वं ब्राह्मणै ब्रह्मदर्शिभिः
बाह्यमाभ्यन्तरञ्चास्य तमः सर्वं विनाशितम् ॥ ९ ॥
ब्राह्मणैः स्वार्थसिद्ध्यर्थं ते ते धर्माः प्रचारिताः
सासूयं केऽपि ये नित्यं ब्रुवन्त्येवं ब्रुवन्तु ते ॥ १० ॥
निन्दन्तु यदि निन्दन्ति विचिकित्सापरायणा;
सत्यं सनातनं नित्यं नह्यनित्यंभवेत् क्वचित् ॥ ११ ॥
सत्यं न स्वप्रकाशाय जातु हेतुमपेक्षते
स्वयं चन्द्रस्तमोहन्ति स्वयं भानुश्च भासते ॥ १२ ॥
अनार्या अपि चेदार्यशूद्रसज्जातिमाश्रिताः
विप्राणामेव सा शक्तिर्विप्राणामेव सा कृपा ॥ १३ ॥
फलैर्मूलैस्तृणैश्चापि क्वचिदेकान्तकानने
स्ववृत्तिं धारयद्भिश्चेत् हृतं किञ्चित् हरन्तु ते ॥ १४ ॥

कृषकेभ्योऽखिला धात्री शिल्पिभ्यः शिल्पसंहतिः
क्षत्रियेभ्योऽखिलं राज्यं दत्तं ब्राह्मणसूनुभिः ॥ १५ ॥
धनं धान्यं धरा सर्वा यदन्यद् वृत्तिसाधनम्
दत्तं तत्सर्वमन्येभ्यः स्वयं भिक्षाश्रितै र्द्विजैः ॥ १६ ॥
छद्मना किन्तु पाश्चात्यैं नीतिरेषोररीकृता
"ब्राह्मणा भारतप्राणा दूषणीयाः कथंचन ॥ १७ ॥
ब्राह्मणे निन्दिते जाते स्वयं निन्द्येत संस्कृति;
कारणे विकृते जाते कार्यं विक्रियते स्वयम् ॥ १८ ॥
ब्राह्मणै रच्यते नित्यं ब्राह्मणस्वार्थसाधिनी
वर्णाश्रमव्यवस्थेयम्", वदन्त्येवं छलेन ते ॥ १९ ॥
किन्तु नाविष्कृता विप्रै रियं स्वाभाविकी स्थितिः
धर्मार्थकाममोक्षाणां शाश्वती कापि साधिका ॥ २० ॥
सामान्यञ्च विशेषश्च द्वौ पदार्थौ सनातनौ
साम्ये सत्यपि सर्वत्र विशेषोऽपि सनातनः ॥ २१ ॥
सर्वेषामेव कर्माणि न तुल्यानि कदाचन
भिन्नभिन्नार्थ सम्पत्त्यै वैशिष्ट्यं हि कणे कणे ॥ २२ ॥
कैश्चिद्व द् ब्राह्मणैः स्थेयं ज्ञानविज्ञानरक्षकैः
कैश्चिच्च क्षत्रियैरेव राष्ट्ररक्षापरैः सदा ॥ २३ ॥
सांकर्ये वर्णवृत्तीनामेकत्रापि क्वचित् स्थिते
कार्यकालेऽपि साँकर्यं भयमेवावहेत्सदा ॥ २४ ॥
क्षत्रियो युद्धवर्ती चेद् ब्राह्मणीं शान्तिमाश्रयेत्
त्यक्तशस्त्रो विरक्तोऽयं राष्ट्रपाती पतेत् स्वयम् ॥ २५ ॥

सर्वैस्तस्मादनुष्ठेयं स्वस्वकर्म दृढात्मभिः
स्वधर्मः श्रेयसे नित्यं परधर्मो भयावहः ॥ २६ ॥
द्विजत्वं यदि वाच्छन्ति शूद्रा अपि शुभं हि तत्
सर्वैरेव हि सम्पोष्यो लोकेऽस्मिन् सात्त्विको गुणः ॥ २७ ॥
सदाचारपरैः स्थेयं सर्वैस्तैः किन्तु सन्ततम्
विना सत्त्वस्य संशुद्धिम् द्विजत्वं नैव वर्धते ॥ २८ ॥
दुर्वृत्ता नैव जायन्ते ब्राह्मणा अपि ब्राह्मणाः
शान्तोदान्तः क्षमाशीलो ब्राह्मण इति पूज्यते ॥ २९ ॥
स्वाभाविकी भवे भक्तिः सत्यरक्षापरा मतिः
दिव्या सारस्वती शक्तिः ब्राह्मणे सम्पद्यते ॥ ३० ॥
निर्भीतिः सत्यवक्तृत्वं सभायां स्पष्टवादिता
सर्वेषां यत्र विश्वासः ब्राह्मणः स समर्च्यते ॥ ३१ ॥
वेदमूर्तिरयं विप्रः प्रकाशितपरावरः
तस्मिन् स्वस्थे जगत्स्वस्थमस्वस्थेऽस्वस्थमेव तत् ॥ ३२ ॥
न क्रोधाय न लोभाय स्थानं देयं द्विजात्मना
नच स्थेयं कचित्तेन वृत्त्यै परवशात्मना ॥ ३३ ॥
विप्रैरद्य परित्यक्ता गुणाः स्वाभाविका निजाः
परिक्लिश्यन्ति तस्मात्ते लोकश्च परिखिद्यते ॥ ३४ ॥
दैन्यवृद्धिकरी ह्येषा स्वात्मसत्त्व विनाशिनी
ब्राह्मणैः ज्ञानखड्गेन हन्तव्या हीनभावना ॥ ३५ ॥
दुष्टाः सर्वेऽपि दग्धव्याः प्रदीप्तब्रह्मतेजसा
हन्तव्याश्च नहि क्वापि पापमार्गप्रचारकाः ॥ ३६ ॥

पुण्यावृत्तिः समुद्भाव्या दौरात्म्यक्षयकारिणी
शास्त्ररक्षा च कर्त्तव्या शिक्षा देया च शाश्वती ॥ ३७ ॥

गर्हितञ्चेत् क्वचित् विप्रैः कृतं वा क्रियतेऽधुना
प्रशस्यं तन्न केनापि गर्हितं गर्ह्यमेव हि ।

सर्वे देशाः स्वदेशा नः हिते लोकस्य नो हितम्
व्यापिनी नो महावृष्टिः कस्य क्षेत्रे न वर्षति ॥ ३८ ॥

कलेः कालस्य घोरस्य किञ्चनैतत् फलं कटु
विश्वदृष्टिर्विलुप्तायत् ब्राह्मणे ब्रह्मदर्शिनि ॥ ३९ ॥

क्षुद्रा दृष्टिः सदा हेया विधेया विश्वहर्षिणी
यत्र कुत्रापि यत्सत्यं ग्राह्यं तच्च ततस्ततः ॥ ४० ॥

सत्यं न स्वविकासाय जातु जातिमपेक्षते
यत्र सत्यं स्वयं तत्र जातिः स्याद् गुणशालिनी ॥ ४१ ॥

द्विजद्रुहः सन्तु सहस्रशोऽपि द्विजै र्नतेभ्यः परिशङ्कनीयम्
द्विजस्वरूपे प्रकृतिप्रशान्ते विद्वेषवह्निः स्वयमेतिशान्तिम् ॥ ४२ ॥

ओजस्विनीं तस्य निशम्य वाचम्
कर्तव्य बोधेन विचारमग्नाः
प्रोत्साहितास्तेन विपश्चितस्ते
दीप्ता बभूवुर्निजगौरवेण ॥ ४३ ॥

स्थित्वा यथेच्छंकतिचिद्दिनानि स्नात्वा च पुण्ये सरसि प्रसन्ने
पुनर्न्यवर्तिष्ट निजे निवासे ततो मनोहारिणि सिद्धपीठे ॥ ४४ ॥

———:०:———

# हरनामामृते चतुर्दशः सर्गः

पदे पदे तीर्थशतैरुपेते राज्ये ततोऽथ त्रिहरेः कदाचित्
पुरीं प्रसन्नप्रकृतिप्रसन्नां सद्भिः स नीतस्त्रिहरिं विशालाम् ॥ १ ॥
सुस्वागतैः पौरजनैरसंख्यैः बुधैश्च सर्वैरभिनन्द्यमानः
यस्यामसौ कामपि यज्ञशालां ददर्श दिव्यां हुतदिव्यगंधाम् ॥ २ ॥
शास्त्रीयचर्चाङ्कितचारुभावाः तास्ताः कथा यत्र वभूवुरार्याः
नानाविधैः कर्मभिरातिथेयैः स्वाहेति मन्त्रध्वनिभिः सहैव ॥ ३ ॥
अहो बुधानां हि समागमेषु नवाः नवा के न विभान्ति भावाः
हासेऽपि येषां रुचिरैर्विलासैः सरस्वती नृत्यति विस्मृतात्मा ॥ ४ ॥
तदत्र यज्ञाङ्गबलिप्रसङ्गा चर्चाथ काचित् प्रचचाल रम्या
मान्यैः वेदान्त्यैः हरदत्तसंज्ञैः विद्वत्समाजप्रथितप्रभावैः ॥ ५ ॥
आस्ते हि लोको न सदैकबुद्धिः पक्षोऽपि वादे च बुधस्य नैकः
यमेव यत्राश्रयते हि वाग्मी स सर्वथा मण्डयते तमेव ॥ ६ ॥
मांसाशिनः केचिन मांसमत्याः सम्प्रेर्यमाणा जगतश्च गत्या
"हिंसा न हिंसा यदि वैदिकी सा" शास्त्रप्रमाणैरिति साधयन्ति ॥ ७ ॥
हिंसेति नाम्नापि विकम्पमाना अहिंसया चैव फले कृतार्थाः
नेच्छन्ति च क्वापि हतिं पशूनाम् कृपालवः सात्त्विकवृत्तिचित्ताः ॥ ८ ॥
" स्वैरं विहङ्गा गगने चरन्तु वने यथेच्छं मुदिताः कुरङ्गाः
लोकेऽखिले सर्वहितेऽनुरक्ता नरा अदृप्ता इति भावयन्तः ॥ ९ ॥
स्वभावतः कोमलवृत्तिवर्ती स्मरन्स्मृतीनां वचनं स तस्मात्
" यस्यात्ति मांसं स तमत्ति नूनं" पुपोष यज्ञे न वधं पशूनाम् ॥ १० ॥

स्वयुक्तिभिः शास्त्र वचोऽनुगाभिः संस्थापयंस्तत् स्वमतं स सम्यक्
स्थितिं परेषाञ्च समीक्षमाणो धीरो न केषां न मनांसि जह्रे ॥ ११ ॥
नाहं विरोधी खलु यज्ञबुद्धेर्यज्ञा विधेयाः सततं विधिज्ञैः
यज्ञात्मकं चक्रमिदं जगत्याः यज्ञं विना न प्रगतिं करोति ॥ १२ ॥
संस्कारमार्थं दधती विशालं सा संस्कृति र्यज्ञमयी द्विजानाम्
सदैव रक्ष्या च सदैव मान्या त्रैलोक्यसंतृप्तिपरा स्वभावात् ॥ १३ ॥
विधिः प्रसिद्धः प्रकृते विंधाने "सर्वैर्मिथः स्व प्रगति र्विधेया"
सोमेन तृप्यन्तु सदैव देवाः पर्जन्यजन्यैश्च धरा पयोभिः ॥ १४ ॥
मोदेत लोको घृतधूमगन्धैरध्यात्मयज्ञै र्निखिलान्तरात्मा
स्वाध्याययज्ञै र्हि महर्षिसंघः सन्मानदानैः सुधियश्च सर्वे ॥ १५ ॥
तत्त्वं तदेतत् परमद्य लुप्तम् विध्वंसबुद्धिर्बलवद् विवृद्धा
लोकै र्नचेदं बत चिन्त्यते यत् परस्य नाशोऽपि निजस्य नाशः ॥ १६ ॥
जगद्द्रुहां दुष्कृतशोधनाय निचीयतां कापि सुयोजना तत्
बाह्यस्वरूपे कलहं विवर्ज्य यज्ञस्वरूपं सुविमृग्यमद्य ॥ १७ ॥
बलिः पशूनां न बलिर्मतो मे बलिस्तु देयो निजदोषराशेः
स्वार्थस्य होमेन परार्थसिद्धि र्विधीयते यत्र स यज्ञधर्मः ॥ १८ ॥
प्रादुर्भवेच्चेदिह यज्ञबुद्धिः राष्ट्रं न राष्ट्रं निगलेत् कदाचित्
दहेन्न लोकं विवशं रणाग्निर्धात्रीव शान्तिश्च भवं प्रपुष्येत् ॥ १९ ॥
सर्वश्च सर्वस्य सुखाभिनन्दी सर्वत्र सर्वाभ्युदयं विदध्यात्
गुणा यथाऽन्योऽन्यकृतोपकारास्त्रयोऽपिसंभूय सृजन्ति सर्गम् ॥ २० ॥
यज्ञाय चेत्तां विदधीत हिंसां हिंसा नसा स्यादिति ये वदन्ति
मीमांसकास्ते दुरिताग्निदाहै र्मुक्ता नहिंस्यु र्विधिरेष नित्यः ॥ २१ ॥

पापं हि पापाय न मङ्गलाय वाचस्पतेरुक्तिरियं प्रसिद्धा
पशिष्टि सम्प्राप्त सुधांधसोऽपि देवा न किं भेजुरकं कदाचित् ? ॥ २२ ॥
हिंसा न हिंसा यदिवैदिकी सा मान्योऽपि पक्षः क्वचनैष तस्मात
न सार्वभौमो नच सर्वमान्यः स्वार्थस्य भावोऽपि विभाति यस्मिन् ॥ २३ ॥
तन्मानवैरेव निजात्मतुष्ट्यै पन्था वृतोऽयं कथयन्ति केचित्
स्वघातकं वीक्ष्य पुरः स्थितं न पशुः प्रहृष्टः क्वचनापि दृष्टः ॥ २४ ॥
देशेष्वनेकेषु पुरा सुराणां मतापि चेत् चेयमथ प्रणाली
नेयं पुराणी नच सात्विकीयम् आर्यस्वभावो व्यथते हि यस्याः ॥ २५ ॥
भिन्नेषु पक्षेषु बुधैः समीक्ष्यः समन्वयो ह्येव विधेर्निबन्धे
शास्त्रेषु तत्तत्प्रतिपादितेऽपि सिद्धान्तरूपं न भिदामुपैति ॥ २६ ॥
विधिः क्वचिद्यः स परत्र चापि विधि र्विधिर्नायमिहास्ति कश्चित्
देशस्य कालस्य च योग्यतायाः कषोपलेऽसौ सततं परीक्ष्यः ॥ २७ ॥ *
सामान्यधर्मं स्वविशेषधर्मो विशेषधर्मश्च विबाधतां किम्
रुद्धेऽपि वाते क्वचनावरोधैः सदागति स्तस्यहि केन रुद्धा ॥ २८ ॥
जैनैश्च बौद्धैर्न समं सदाहं सर्वत्र हिंसावचनै बिभेमि
हिंसाप्यहिंसा भवतीह काचित् न तां विना सिध्यति यत्र यात्रा ॥ २९ ॥
रणांगणे सा निजधर्मगुप्त्यै क्वचित् कृताचेत् क्रियतां प्रकामम्
दग्धोदरस्यैव कृते कृतेयं गृहस्य कोणे तु कथं समर्थ्या ॥ ३० ॥
स्वार्थी नरो नित्यमहो न कं कं स्वार्थं सृजत्यद्य नवं जगत्याम्
कां कां न चासौ श्रयते न नीतिं पुनः सदा तस्य च साधनाय ॥ ३१ ॥
हिंस्रस्य जन्तोर्न कदापि कैश्चिद् बलिश्च दत्तो विधिना स्वयज्ञे
न यज्ञबुद्धिर्नच धर्म बुद्धिः स्वभोज्य बुद्धिस्तदिह प्रधाना ॥ ३२ ॥

---

*एकत्र यो विधि र्भवति स परत्रापि विधिरेव भवेत्,, एवम्विधः कश्चित् विधि र्नास्ति

सिंधावगाधेऽद्य न कापि रक्षा न चापि काचिद् गगने दविष्ठे
यतो यतो याति नृदृक् विषाक्ता ततस्ततो वर्षति वह्निराशिः ॥ ३३ ॥
के के प्रदेशाः प्रकृतेः सुरम्याः नोत्सादिता हन्त न कामचारैः
वस्तूनि वा कानि कलात्मकानि तपः फलान्यत्र न नाशितानि ॥ ३४ ॥
विलोक्य यान् रोदिति रस्यतेयम् विभीषिका नृत्यति दत्तताला
विडम्बनेयं जनजीवनस्य काचित्प्रवृत्तिश्च चलैव धातुः ॥ ३५ ॥
वनानि कृन्तन् विहगान्पशूँश्च तन्वन् प्रजाः कीटगणानिव स्वाः
दुष्पूरणीयोदर-गर्तपूर्त्यै किं किं न पापं कुरुते जनो न ॥ ३६ ॥
अहो जघन्या नरसृष्टिरेषा किमद्य सर्वान् यतते विहन्तुम्
कृतार्थता यस्य सु जन्मनस्तु प्रेमात्मना भूतदयैव नान्या ॥ ३७ ॥
परस्परं भक्षितुमुद्यतानां मूढात्मनामल्पधियां तिरश्चाम्
कथं हि षड्वर्गजितां नराणां साम्यं भवेद् ज्ञानदृशां कदाचित् ॥ ३८ ॥
पशुत्ववृद्ध्यै न मनुष्ययोनिर्यस्यां तितिक्षा च शमः प्रधानः
दूष्ये न नेत्रे निजपक्षपातैर्भागः परेषामपि रक्षणीयः ॥ ३९ ॥
दृष्टं मया ताण्डवनृत्यमेतत् स्वार्थस्य वृत्तेश्च निजांधतायाः
यज्ञेऽपि नैतत् परिदर्शनीयम् स्वभावतो विश्वजनीनसङ्गे ॥ ४० ॥
अपक्षपातं वचनं तदीयं श्रुत्वा समेषां हृदयान्यहृष्यन्
श्रोतुञ्च भूयोऽप्यथतद्विचारान् स्थातुं पुनस्तत्र तमन्वरुन्धन् ॥ ४१ ॥

अथ स निवृवृते ततो विधाय
सदसि पिपासितचेतसः समेतान्
निज वचनसुधारसाभिवर्षैः
रुचिरविवेचनया चमत्कृतांस्तान् ॥४२॥

———

# हरनामामृते पञ्चदशः सर्गः

तस्मिंस्तत्र वसत्येवं पावने जान्हवीतटे
पर्वराट् सुकृतस्रोतः कुम्भामिधमुपाययौ ॥ १ ॥

हृष्यन्ति दिवि देवा वै यस्मिन्पर्वसमागमे
कथं नाम न हृष्यन्तु तस्मिन् भारतजा भुवि ॥ २ ॥

देशात् देशात् सुविख्याता विद्वांसो ब्रह्मदर्शिनः
कन्दराभ्यो गिरीणाञ्च महात्मानस्तपस्विनः ॥ ३ ॥

असंख्याता नरा नार्यो भक्तिश्रद्धापरिप्लुताः
उपेक्ष्य मार्गजं कष्टं के के तत्र न संगताः ॥ ४ ॥

एकमेव हि सर्वेषां लक्ष्यं येषामहो महत्
"गंगास्नानं भवेत्पुण्यं" "आत्मा भूयादकल्मषः ॥ ५ ॥

युगेभ्यो भारतेवर्षे गंगेयं सर्वपावनी
धीरा परमगंभीरा मनः केषां न कर्षति ॥ ६ ॥

गतानां वर्तमानानां भूतानां भूतिकारिणी
संसृताप्यर्णवं नित्यं संसृतार्णवहारिणी ॥ ७ ॥

उपस्पृष्टा स्तुता स्तोत्रैः पुष्पमालाभिरञ्चिता
प्रदोषे प्रत्यहं प्रीता प्रतरद्दीपतारका ॥ ८ ॥

उच्चैः क्वचिद्धसन्तीव नृत्यन्तीव क्वचिच्चला
धुन्वतीवाम्बरं याति प्रस्तरेषु स्फुरद्गतिः ॥ ९ ॥

कुञ्जरव्रजसञ्चारे नमदवञ्जुलमञ्जुला
कूले कलित संगीत—ललनाकुल संकुला ॥ १० ॥

---

शैलकूट पतद्वेग—गुरुगुञ्जितगह्वरा
न चित्तं हरते कस्य नित्यं कलकलस्वरा ॥ ११ ॥
नित्यं संसेव्य यत्तीरं निर्निमेषा निमेषतः
असीम्नोऽपि परं पारं सुपश्यन्ति मुनीश्वराः ॥ १२ ॥
तस्या एव शुभे तीर्थे स्थले द्वे एव यात्रिणाम्
जह्रतुर्हृदयं भूरि स्वस्वभाव मनोहरे ॥ १३ ॥
ब्रह्मकुण्डे महापुण्ये सस्नुस्ते तीर्थयात्रिणः
ययुर्वा चित्तशुद्ध्यर्थं हरनामाङ्किते स्थले ॥ १४ ॥
यत्र संगत्य तच्छिष्यैर्गुरोः सम्मानकांक्षिभिः
प्रार्थितः संघयात्रार्थं भक्तैश्चान्यै मुर्हुमुर्हुः ॥ १५ ॥
नानुमेने मतं तेषां बाह्याऽडम्बरलक्षणम्
अन्तरायश्च नित्यानामाह्निकानां स्वकर्मणाम् ॥ १६ ॥
प्रकृत्यैव जनो लोके गुणवैशिष्ट्यमर्चति
प्रवृत्तिश्च विशिष्टानां नित्यं मानपराङ्मुखी ॥ १७ ॥
प्रसृतां नाम लोकेऽस्मिन् स्वख्यातिं को न वाञ्छति
किन्त्वेषा लोकतत्वज्ञं स्वात्मारामं न कर्षति ॥ १८ ॥
शिष्याणामाग्रहश्चापि गरिष्ठो हि गुरोरपि
इति वारणमारोप्य नीतोऽसौ संघयात्रया ॥ १९ ॥
भाष्याचार्यं तमन्वीयुर्गुरुगौरवसत्कृतम्
परिव्राजोऽपि सत्पूज्याः पुरस्कृत्य जनैःसह ॥ २० ॥
भवन्ति कारणैस्तैस्तै स्तेषां तेषामनुव्रजाः
भयात् केचिन्नरेन्द्राणां लोभद्धनवतां परे ॥ २१ ॥

केषाञ्चित् स्वार्थसिद्ध्यर्थं कौतुकात् क्रीड़िनामपि
परं सर्वात्मभावेन गुरूणामेव तेऽनुगाः ॥ २२ ॥
अहो काचिदनिर्वाच्या शिष्यश्रद्धा गुरून्प्रति
स्वात्मानमुपहृत्यैव यत्रात्मा सम्प्रसीदति ॥ २३ ॥
हस्त्यश्वशिविकाचार स्वाहङ्कारप्रकाशिकाः
संघ यात्रा भवन्त्येव तास्ताः पुण्येषु पर्वसु ॥ २४ ॥
विरला एव सा काचित् तादृशी किन्तु दृश्यते
यस्यां व्रजन्ति यात्रायां वेदाः साक्षात् समूर्तयः ॥ २५ ॥
प्रोल्लिखन् धर्मसंस्कारान् स्वच्छमानसभित्तिषु
निवृत्तोऽसौ बुधस्तस्या यात्रायाः सत्वरं परम् ॥ २६ ॥
अर्च्यान्समर्चितुं विज्ञान् परिषत्सु समागतान्
सत्कृतो हि भवेत्स्वस्थः सत्कृत्यैव सतः परान् ॥ २७ ॥
विदुषां संगमे तस्मिन्नपूर्वे संस्कृतात्मनि
के के न संगता विज्ञाः सर्वे विद्यादिवाकराः ॥ २८ ॥
सीतारामा महाप्राज्ञा विद्यामार्तण्डभास्वराः
व्याख्यातवेदवेदाङ्गा शास्त्रिणो लोकविश्रुताः ॥ २९ ॥
भट्टाः श्रीमथुरानाथाः काव्यपीयूषवर्षिणः
मञ्जु—गीति — कलाकेलि कविताकुञ्ज—केकिनः ॥ ३० ॥
प्राच्यनव्यरहस्यानां व्याख्याता ऽथ प्रकाशकः
श्रीमान् प्राध्यापकश्रेष्ठः सूर्यनारायणः सुधीः ॥ ३१ ॥
अङ्गात् वङ्गात् कलिङ्गाच्च राजस्थानात्तथैव च
मिथिला प्रान्ततः प्राप्ता वच्चूझा विबुधेश्वराः ॥ ३२ ॥

अन्ये च बहवो विज्ञा येषां स्वागतमाचरत
समितिस्वागताध्यक्षः सतां संस्कृतसंसदि ॥ ३३ ॥
समासीनेषु सर्वेषु मण्डपे विबुधेषु च
भावानिमानभिव्यक्तान् चक्रेऽसौ भाष्यभास्करः ॥ ३४ ॥

# अखिल भारतीय

## ※ संस्कृत सम्मेलन स्वागत भाषणम् ※

मान्या विद्वद्वरा पूज्या महात्मानो विचक्षणाः
अन्ये च संस्कृतात्मानः आर्यावर्त—विभूतयः ॥ ३५ ॥
कीदृशं स्वागतं कुर्वे कथम्वा क्रियतां हि तत्
विभूनां विदुषां यद्वः सर्वेषां वैभवं विभु ॥ ३६ ॥
नूनं भाग्योदयं मन्ये कश्चनाद्य विलक्षणम्
दर्शनै र्यत्र मान्याना मन्तरात्मा प्रसीदति ॥ ३७ ॥
वय मद्य प्रवृत्ताः स्म वेदोद्धार विचारणे
संस्कृतम् संस्कृतैभावैः कर्तुं लोकञ्च सर्वशः ॥ ३८ ॥
स एव हि क्षणो लोके मान्या मान्यतमो मतः
यस्मिन् विगतचिन्तोऽयं जनः स्वात्मानमीक्षते ॥ ३९ ॥
शाश्वतं ये विचिन्वन्ति—शाश्वतस्यानुसारिणः
त एव पण्डिता नूनम् अन्ये सर्वेऽपि खण्डिताः ॥ ४० ॥

विस्मृतं सर्वमेवाद्य प्राक्तनं हन्त गौरवम्
क्व तद् ज्ञानं च विज्ञानम् मौर्ख्ये पाण्डित्य मास्थितम् ॥४१॥
अविद्यैवाद्य सद्विद्या कुनीति र्नीतिरेव च
शिक्षालक्ष्यं शुनो वृत्ति र्वित्तं मानाय कल्प्यते ॥ ४२ ॥
अहोदुर्मतिरद्ये यं कीदृशी 'जृम्भते' भवे
यत्र रत्नानि निक्षिप्य ध्रियते काचमण्डनम् ॥ ४३ ॥
विवेको न सदाचारो लुप्ता तत्वविचारणा
शुष्कवादरजोव्राते दूषितं लोक लोचनम् ॥ ४४ ॥
अनाचारेण घोरेण तेजो राष्ट्रस्य नश्यति
प्रमादालस्यसंमोहै राक्रान्तश्चाभिभूयते ॥ ४५ ॥
आचारः प्रथमो धर्मः—आधारश्चार्य संस्कृतेः
लोके संरक्ष्यते सर्वम् आचारे रक्षिते सति ॥ ४६ ॥
तस्मादद्य हरद्वारे गंगायाः पावने स्थले
संस्कार्यैव निजा शिक्षा संरक्ष्या च स्वसंस्कृतिः ॥ ४७ ॥
संस्कृते संस्कृतिः शुद्धा विकृतिः संस्कृते कुतः
सर्व शुद्धोज्ज्वले रत्ने कुतो रेखा मलीमसा ॥ ४८ ॥
कुतो वा कलमषं किञ्चित् गांगेये निर्मले जले
प्रकाशो न तमः सूते सुकृतं नच दुष्कृतम् ॥ ४९ ॥

एकांशोऽपि क्वचित् कश्चित् नास्ते यस्यां निरर्थकः

वाक् सेयं संस्कृता साक्षात् सर्वशुक्ला सरस्वती ॥ ५० ॥

शब्दे या व्यापिनी शक्तिः सा व्याप्ता संस्कृतेऽखिला

तस्या एव परिस्फोटो लोके सर्वत्र भासते ॥ ५१ ॥

नादोऽव्यक्तश्च यः कश्चित् स व्यक्तः संस्कृतैः स्वरैः

शाश्वतीं श्रुतिमापन्नः श्रूयते सन्ततं सुरैः ॥ ५२ ॥

तत्तद्रूपवती भाषा यथाद्यास्ते तथा पुरा

यावन्मुखानि तावन्तो व्याहारा स्युः पृथक् पृथक् ॥ ५३ ॥

सिद्धः शब्दस्तु सर्वेभ्यः परमेभ्यः परः क्वचित्

स एव भासते नित्ये संस्कृते सुरसंस्कृते ॥ ५४ ॥

अपभ्रंशो हि भेदानां जनकः पातको नृणाम्

लोके ये साम्यमिच्छन्ति संस्कृतं तैः प्रयुज्यताम् ॥ ५५ ॥

पृथिव्यामेव नैतेन साम्यं सम्प्राप्स्यते ततः

सहजो येन सम्बन्धः सर्वैर्लोकैर्विपश्चिताम् ॥ ५६ ॥

संसर्गान् म्लेच्छभाषाणां तैस्तैरन्यैश्च कारणैः

सर्वत्र प्राकृते लोके वर्धते वाग् विपर्ययः ॥ ५७ ॥

सम्यक् शब्द प्रयोगेण शब्दोऽसौ लभते बलम्

स एव जायते क्षीणो न चेत् शुद्धः प्रयुज्यते ॥ ५८ ॥

दुष्टान् शब्दान् प्रयुञ्जाना दुष्टान् लोकान् प्रकुर्वते
विज्ञास्तस्माद् विशुद्धास्ता वाचो नित्यं प्रयुञ्जते ॥ ५९ ॥

जायते स्वरवैषम्याद वैषम्यं जगति स्वतः
विशुद्धैः स्वरयोगैश्च सौम्यं साम्यं समेधते ॥ ६० ॥

रक्षायै वेदतत्वानां शब्दशक्तेश्च गुप्तये
शब्दास्तन्मुनिभिर्नित्यं संस्क्रियन्ते पुनः पुनः ॥ ६१ ॥

स्वगतं सूच्यते नित्यं काकैरपि पिकैरपि
स्वरतो वर्णतो भेदे भेदः किन्तु स भीषणः ॥ ६२ ॥

वर्णा रक्ष्याः स्वरा रक्ष्या रक्ष्या सार्थकता मतिः
जाते शब्दे हि निःसारे विकृतिः स्याद् विघातिनी ॥ ६३ ॥

यत्र तत्र च जायन्ता मादेशाः प्रत्ययास्तथा
अक्षरात्मनि शब्दे तु नित्यतैव प्रतिष्ठिता ॥ ६४ ॥

शक्तिरेषा महामाया शाश्वती शब्दरूपिणी
अस्या एव विकासो ऽयं भवे भावात्मकं हि यत् ॥ ६५ ॥

अस्या एव स्वरस्फोटे वर्णाः सर्वे स्फुटाः स्वयम्
ब्रह्मणि सर्वतत्वाना माभासो भासते यथा ॥ ६६ ॥

अक्षरस्य प्रपञ्चो ऽयं पञ्चातीतः स एव हि
एकैकमक्षरं मन्त्रः तन्त्रसिद्धान्त सम्मतः ॥ ६७ ॥

एकः शब्दोऽपि सुज्ञातः सुप्रयुक्तश्च मानवैः

कामधुग् जायते तस्मात् स्वर्गलोकेऽपि किं भुवि ॥ ६८ ॥

सूक्ष्मं तत् शब्दशास्त्रस्य रहस्यं ज्ञातुमक्षमाः

भाषाया वाह्यरूपाणा माभासैं हृतंबुद्धयः ॥ ६९ ॥

हसन्त्यद्य नवीनाश्चेद् विज्ञाः पाश्चात्यवृत्तयः

मूढात्मानो हि ते क्षम्या न निन्द्या बालबुद्धयः ॥ ७० ॥

येषां हि यादृशी दृष्टि स्तादृशं तैं विलोक्यते

कथमन्धैः परीक्ष्येत शुक्ले कृष्णे च भिन्नता ॥ ७१ ॥

आलोकित यदालोक्यं सर्वं संस्कृत पण्डितैः

केचिद्दिवापि नेक्षन्ते भास्वांस्तत्र करोतु किम् ॥ ७२ ॥

भाषा भाषेति भाषन्ते का भाषेति न जानते

न जानन्ति तथा मूढाः कोऽस्या वक्ता च शाश्वतः ॥ ७३ ॥

सन्त्यद्यापि जना विज्ञाः कवयश्चापि मोहकाः

किन्त्वालोक विहीनैस्तैं र्निजात्मापि न दृश्यते ॥ ७४ ॥

पश्यद्भि र्दृश्यते नैभिः शृण्वद्भिः श्रूयते न च

जाग्रतोऽपि प्रसुप्तास्ते, पीता गीः संस्कृता न यैः ॥ ७५ ॥

ते तेष्वपि देशेषु दर्शनं दर्शकैः कृतम्

दृष्टं कैः किन्तुलोकेऽस्मिन् नित्यं यत् पुरः स्फुरत् ॥ ७६ ॥

रसः कस्तादृशो लोके नास्ते यः संस्कृते क्वचित्

आविर्भूतं तिरोभूतं सर्वं ब्रह्मणि जायते ॥ ७६ ॥

भाषेयं सर्वभाषाणां संस्कृतीनाञ्च भूतले

माता मान्यतमा नित्या देवलोकेऽपि पूज्यते ॥ ७७ ॥

कीदृशीयमहो विम्बी नित्या संस्कृत भारती

यत्र संकीर्णतावृत्त्यै नावकाशोऽस्ति कश्चन ॥ ७८ ॥

शब्दान् सर्वान् समासेन योजयन्ती परस्परम्

तत्तद्विभक्ति लोपेन नयत्येक पदेऽखिलान् ॥ ७९ ॥

" सर्वे भद्राणि पश्यन्तु सर्वे सन्तु निरामयाः

नित्येयं भावना यस्यां सा भाषा सुरभारती ॥ ८० ॥

लोकस्य परलोकस्य द्वयोर्यत्र च रक्षणम्

यथार्थादर्शे सम्पन्ना सा भाषा सुरभारती ॥ ८१ ॥

त्रिलोकव्यापिनी यस्याः संस्कृति विश्ववोधिनी

त्रैकालिकाश्च सिद्धान्ताः सा भाषा सुरभारती ॥ ८२ ॥

"सर्वेस्युः संस्कृतात्मानः सर्वे संस्कृतबुद्धयः

कण एकोऽपि लोकेऽस्मिन् नच तिष्ठेदसंस्कृतः ॥ ८३ ॥

पूज्यास्ते संस्कृतात्मानो येषामेषाहि भावना

लभन्ते स्वपदं सर्वे विशाले गगन स्थले ॥ ८४ ॥

संस्कृतज्ञेऽपि संकोच स्तुच्छा वा वृत्तिरात्मनः
असह्या दूरत स्त्याज्या क्षुद्रकामा न यद्वयम् ॥ ८५ ॥
येन केन भवेदुक्तं मानवेनेति का कथा
प्रस्तरेणापि यत्प्रोक्तं मान्यञ्चेत् मान्यमेव तत् ॥ ८६ ॥
सर्वेष्वपि पदार्थेषु चेतनाचेतनेषु च
एक एव बिभुर्नित्यं विद्यते च बिभासते ॥ ८७ ॥
"नवीनाः खलु सन्त्येते प्राचीनाः सन्ति ते तथा
मतिरेषाल्प – बुद्धीनाम् विज्ञाः सर्वैक्यदर्शिनः ॥ ८८ ॥
कृतं साम्प्रतिकै र्यद्यत् क्रियते बा नवं नवम्
तस्मिन्नपि शिवांशश्चेत् स्वागतं तस्य कुर्महे ॥ ८९ ॥
यश्चिन्तयति यो वेत्ति चेष्टते यश्च सन्ततम्
स एवासीत् पुरासर्गे नव्ये चापि स एवहि ॥ ९० ॥
शाश्वतं शैशवं यस्मिन् शाश्वतं यौवनं तथा
तत्रास्मिन् भारते देशे बृद्धा अपि सदा नवाः ॥ ९१ ॥
नह्यत्र किञ्चन प्रत्नं नूतनं वा क्वचिद् भवे
द्रष्टुरेव हि सा दृष्टि र्यया वैविध्यमीक्ष्यते ॥ ९२ ॥
तस्मादुन्मील्य सच्चक्षुरालोको दृश्यतां नवः
नवैर्भावै र्नवोत्साहै र्नवः सर्गः प्रवर्त्त्यताम् ॥ ९३ ॥
उन्निद्रतां समासाद्य साम्प्रतं नः सरस्वती
किमप्यभिनवं गीतं गास्यत्येव नवस्वरैः ॥ ९४ ॥
लोकेनापि प्रबुद्धेन ध्रुवं तच्छ्रोष्यते पुनः
प्रफुल्लाच्च मनोलोकाद् वहेन्मन्दाकिनी नवा ॥ ९५ ॥

जायते नैदमद्यैव पुराप्येवं व्यजायत
नित्या वेदमयी वाणी नित्यं व्याहरते नवम् ॥ ९६ ॥

मूकेऽस्मिन् भवकारणे प्रथमतो वाक् प्रादुरासीद्धिका
कस्याः शब्दगतेः स्वरैश्च मधुरै मौनं जगत्या हृतम्
शब्दार्थौ च निरर्थकावनियतौ जातौ कुतः सार्थकौ
सन्तृप्ता च कया गिरा विधिसुता सारस्वतं वर्षति ॥ ९७ ॥

यस्याः शब्दनिधिः परः प्रतिनिधिस्तत्तद्युगानां महान्
खं ब्रह्मेति विदन्ति वेदमुनयो यस्याः प्रकाशे परे
या नित्या विकृतिर्न यत्र भविता भूता न वा काचन
सा शक्तिर्हि कथं विमूढमतिभि र्मर्त्यैर्मृता मन्यते ॥ ९८ ॥

किं तद्यन्न पदे पदे सुरगिरः शब्दे विभौ भासते
नित्यो यः सततं सुधामपि हसन् भव्यार्थभावोद्गमः
आनन्दस्य रसो विलक्षणगुणो विभ्रन्महः शाश्वतम्
रम्यामुन्नयतीह कां न लहरीं नित्यं कवीनां हृदि ॥ ९९ ॥

दिव्यं संसदि संस्कृतात्ममनसाँ सन्देशमेवं दिशन्
संस्थाभ्यो विरतोऽपि नित्यनिरतो भाष्यावगाहेपुनः
शान्तः शुद्धमतिः परात्मनि भृशं युञ्जन्स्वकीयं मनः
एकान्ते निवसन्निनाय समयं मुक्तो हि जीवन्नपि ॥ १०० ॥

---

# हरनामामृते षोडशःसर्गः

आयत्तणो वेत्ति न निश्चयेन परत्तणे किं भवितेह लोके
अतर्कितं तत् श्रुतमद्य लोके मन्दिं गतो भाष्यविभासिदीपः ॥८१॥

अस्वस्थतां स्वस्थमतिः स यातः श्रुत्वेति शिष्यैस्त्वरयोपनीतैः
कृतेऽपियत्ने बहुशो भिषग्भि-र्बाह्योपचारे न मतिं बबन्ध ॥ २ ॥
पिबन् स शास्त्रामृतमेव तेभ्यस्तदेव भूयोऽपि पिपासतिस्म
स्वाभाविकी यद् विदुषामनास्था विनश्वरे भौतिक देहधर्मे ॥ ३ ॥
ज्ञात्वागुरोस्तां चरमामभीप्सामार्षाणि वाक्यानि निशामयन्तः
समन्ततोऽमुं परिवार्य तस्थुः सर्वे सशिष्या विबुधास्त्रिपुर्याः ॥ ४ ॥
सन्देशदानाय मुहुर्निबद्धो दिदेश बद्धाञ्जलिभिस्तदानीम्
" द्विजैर्द्विजत्वं हि सुरक्षितञ्चेत् सुरक्षितं तेन भवत्यशेषम् ॥ ५ ॥
उक्त्वेति वाचं विनियम्य विद्वान् मौनं मनोब्रह्मणि संनियुज्य
सम्पश्यतामेव च तत्र तेषाम् आत्यन्तिकीं शान्तिमथ प्रपेदे ॥ ६ ॥
तस्मिन् विलीनेऽपि भुवो न लीना सनातनी किन्तु गतिस्तदीया
तदात्मनोर्या सुतयोर्वहन्ती बभौ सुशिष्येषु नवा नवैव ॥ ७ ॥
जहौ शरीरं क्षितिमात्ररुद्धम् बिम्बीमरुद्धाञ्च गतिं जगाम
गतोऽपि तस्मान्न गतःस विद्वान् ज्ञानात्मना जीवति यो जगत्याम् ॥ ८ ॥
विवेकधारा च तनोति येषां जगत्स्वसंख्यान् विमलान् प्रवाहान्
कथं मृतास्ते कृतिनः कृतार्था यज्जीवनै र्जीवनमेति धात्री ॥ ९ ॥
सहस्रशः पुण्यकणान् प्रसूते कचिन्निरुद्धापि गतिश्च येषाम्
शुष्यन्तु शाखा जरतां तरूणां शिष्य प्ररोहाः सरसाः सदैव ॥ १० ॥
प्रवर्तको नैव नृपो युगस्य हेतुः प्रवृत्तौ बुधएव यस्य
यथा यथा तेन विचिन्त्यते यत् प्रवर्त्यते तत्र तथैव लोकैः ॥ ११ ॥
विवर्धमाना सततं सुधीभिः प्रवर्तिता तेन परम्परा तत्
तल्लब्धभासां विदुषां यशःसु लोकै र्विलोक्या भुवि भासमाना ॥ १२ ॥

वेदप्रकाशेन विभासमाने

ज्ञानेन मानेन च वर्धमाने ॥ १३ ॥

षट्शास्त्रनिष्णातमतावुदारे

देवीप्रसादे तनये तदीये ॥ १४ ॥

पौरैस्तथा जानपदैश्च सर्वैः सम्मानिते सम्मतिशासनाय

तत्तन्नृपाभ्यर्चितपादपद्मे तथापरैः स्नेह समुन्नते च ॥ १५ ॥

काले कराले ऽपि कलौ च येन के के न देवा ननु तर्पितास्त

स्वाहेति धीरध्वनिना सदैव का वा स्थलीनैव कृता सघोषा ॥ १६ ॥

धराप्रतप्ता गगनं प्रतप्तम् शुष्काश्च कण्ठाः कतिशो न सान्द्राः

मेघै र्नभोव्यापिभि रार्द्रनीलैः कृता न तृप्ता नवजीवनेन ॥ १७ ॥

धर्मच्युता येन दृढाः स्वधर्मे कृता हताशा अपि पूरिताशाः

बुभुक्षिताः स्वादुरसाभितृप्ता मूढाश्च विद्याविनयैः समेताः ॥ १८ ॥

अपि प्रमथ्नन् सकलान्युदारो भिन्नानि शास्त्राणि मतानि चापि

सनातनीमेव सुधां हि धर्म्यां मेने स लोकाभ्युदयाय मान्याम् ॥ १९ ॥

नित्यञ्च शास्त्रार्थपरस्तदर्थम् सद्युक्तिभिः शास्त्रवचोऽञ्चिताभिः

वादेषु तस्मात्तु विपक्षिपक्षम् हसन् स सद्यो विकलीचकार ॥ २० ॥

केचिद् विज्ञवराः सुनीतिनिपुणाः कालस्थिति स्थापकाः

केचिद् ब्रह्मविचारसारनिरता ध्यानेरताः केचन ।

सत्शास्त्रामृतपानमात्ररसिकाः केचिच्च लोके सदा

अस्मिन् सर्वमिदं सुसंगतमहो गेया हि के के गुणाः ॥ २१ ॥

ग्रामे ग्रामे विमलमनसो यस्य शिष्याः प्रशिष्याः

धर्मश्रद्धाः परमसुखिनः कर्मकाण्डप्रवीणाः

दैवज्ञाने प्रथितयशसः पाणिनीये च पूर्णा
आयुर्वेदे विहितगतयो लोकयात्रां चरन्ति ॥ २२ ॥

धीरो भिषक् कर्मणि लब्ध कीर्तिः
तस्यापरोऽभू न्मदन स्तनूजः
यः कर्मनिष्ठो गृहनीतिदक्षः
स्वबन्धु साहाय्यपरः सदासीत् ॥ २३ ॥

श्रद्धान्वितो धर्मरतश्च नित्यं नित्यञ्च शर्वार्चनदत्तचित्तः
सदाशयो यः सुहृदां समाजे निनाय नैजं समयं सुखेन ॥ २४ ॥

विद्यादानैर्भुवि परितता येन शिक्षाप्रणाली
शास्त्रज्ञानामृतरसमयी भारतीया विशुद्धा।
विद्वद्वन्द्यो विमलहृदयः शुद्धबोधाभिधोसौ
भाष्याचार्यान्निजगुरुवरात् लब्धबोधो बभासे ॥ २५ ॥

रामानन्दा बुधवरनुता शब्दशास्त्र प्रवीणाः
शेखवाट्यां प्रति जनमता धर्मतत्व प्रकाशाः।
प्रज्ञादीप्तैः स्वगतनयनैः प्रेक्षका विश्वभासाम्
देशे देशे विमलचरिता स्तेनिरे तस्य कीर्तिम् ॥ २६ ॥

वाग्मी नेता प्रथितविभवो रामदुर्गाधिवासी
वर्धक्षेत्रै कलितसुयशा ज्ञान विज्ञानभासा।
वेदाचार्योऽधिगत गरिमा पत्रसम्पादकत्वे
आसीन्मान्यः प्रकृतिसुभगो बालचन्द्रः प्रसिद्धः ॥ २७ ॥

शास्त्रं सुदुर्बोधमभूत् सुबोधं स्वतो यदग्रे सुसमीक्षितं सत्
श्रीदत्त शास्त्री महनीयमूर्ति गुरुर्गुरूणां स सुगेयकीर्तिः ॥ २८ ॥

विपत्तपत्तविच्छेत्ता प्रतिवादिभयंकरः
शिवनारायणः श्रीमान् नानाशास्त्र विचत्तणः ॥ २६ ॥
प्राप्तास्तनूं धर्मद्रवापरोत्तां विराजमाना द्विजगौरवेण
महाप्रभावा गुरुभक्तिभावा महर्षिकल्पा जयदेवमिश्राः ॥ ३० ॥
भक्ताः परशुरामस्य नित्यं तद्रूपधारिणः
ररत्तु द्विज सम्मानं शान्त्या शक्त्या च सन्ततम् ॥ ३१ ॥
विद्यालयानाञ्च महासभानां संस्थापका व्यासवरा वरेण्याः
गीर्वाणवाणी हृदयैकनाथा गणेशदत्ताः कवयो विशालाः ॥ ३२ ॥
सदार्यसंस्कारकृतप्रसाराः वेदान्तनिष्ठाः सततं प्रसन्नाः
प्राचीनभावा अपि नव्यभावा भव्याः कन्हैय्याङ्कित लालवर्याः ॥ ३३ ॥
शब्दात्मनिष्ठो बहुभिर्वदान्यै मान्यैर्बुधैः सम्विहितप्रतिष्ठः
नित्यं समालोचनदत्तचित्तः श्री रामचन्द्रोऽलवरप्रकाशी ॥ ३४ ॥
छात्रावासो निजगुरुयशः संस्मृतौ येन भव्यः
विद्यार्थिभ्यो निरतिसदनं स्थापितो भक्तिभाजा ।
शित्तादीत्ता प्रवणसुमतिः सोऽग्निहोत्री प्रसिद्धः
नित्यं नाना हवननिरतः पूर्णमल्लो वरिष्ठः ॥ ३५ ॥
सौम्यो वदान्यो मधुरात्ममूर्तिर्विपत्तपत्तस्य जवेन भेत्ता
श्री वेगराजो यतिमन्दिरस्थः साहित्यसंसारबिहारशीलः ॥ ३६ ॥
कालेऽस्मिन् कलिजृम्भितेऽपि नितरामार्षस्थितेः स्थापकः
श्रीमानार्यमुनि र्बभूव मतिमान् शास्त्रार्थशूरो महान् ।
विद्वद्भक्तिरतो विशालहृदयः सत्यार्चने संरतः
आसीद् विप्रवरः सदा स्थिरमतिः श्रीजीवराजाह्वयः ॥ ३७ ॥

राजारामो गुणगणनिधी रामनीतिप्रकाशी
दुर्गाभक्तः स्तवननिरतो नाटकानां प्रयोक्ता ।
मान्यो धीमान् गुरुजन शुभाकांक्षिणामग्रगण्यः
योगाभ्यासी जलधरगति ज्ञानयुक्तो विवेकी ।। ३८ ।।
अपूर्वसिद्धान्तगवेषणार्थी निरन्तरं वेदविमर्श मग्नः
ज्योतिर्विदां मान्यवरो मनीषी श्रीमल्लिनाथोऽथमहानुभावः ।। ३९ ।।
दैवविद् यमुनादत्तो मान्यो देवबने महान्
लब्धनाना महीपालाभ्यर्चनः शास्त्रदर्शनः ।। ४० ।।
श्रीमान् धीमान् मधुरवचनैः सान्त्वयन् सर्वलोकान्
नित्यं दुर्गास्तवननिरतो धर्मशास्त्र प्रवीणः ।
वक्ता वीकानगर जनता सत्कृतः सौम्यमूर्तिः
विज्ञैर्वैद्यै विनततनयै रादृतो वासुदेवः ।। ४१ ।।
विद्वद्भक्तः सहजसरसो दत्तुरामः कवीन्द्रः
पन्नालालः प्रतिपलरतो ग्रन्थसन्दोह पाने ।
प्रह्लादोऽन्यः पठनरसिको ह्लादितात्मा महात्मा
कुम्भारामो गुरुपदरतो नैष्ठिको ब्रह्मचारी ।। ४२ ।।
उद्दण्डाना दलननिपुणो रामदत्तो दृढाङ्गः
जीवानन्दः शिवजप परो यज्ञहोमादिसक्तः
राधाकृष्णः सरसरचना सर्वसेवानुरागी
शादीरामोऽतिथि परिचरः सन् हृषीकेशमान्यः ।। ४३ ।।
वक्ता वरियान् गुरुसेवकश्च माधुर्यमूर्तिः सततं सुधीरः
सासित्यसंसारबिहारशीलः स्मिताभिभाषी बलदेव शास्त्री ।। ४४ ।।

दशाश्वमेधे निवसन् प्रसन्नो मुनिस्वरूपो जयरामदासः
प्रीतो गुरूणां गुणवर्णनेन मग्नः सदा शास्त्रविचारणे च ॥ ४५ ॥
स्वविश्वासस्य रक्षायै हुतं येनाखिलं स्वकम्
सोऽयं विश्वम्भरोनाथः कुर्विलाग्रो द्विजाग्रणीः ॥ ४६ ॥
विज्ञानशक्तिश्च शरीरशक्तिर्यस्मिन् लभेते परिपूर्णशक्तिम्
स वस्तिरामाहृतपाठशाला–प्राध्यापकः शक्तिधरः प्रसिद्धः ॥ ४७ ॥
प्रणीय यस्मादमृतं सुबोधम् सचन्द्रभानु र्भुवि राजमानः
सहैव सम्वर्षति सुप्रसन्नः सदा सुधे द्वे सुखबोधशीले ॥ ४८ ॥
भूतार्थदृश्वा भगवानदासः स्वधर्मनिष्ठः सहलाग्रगण्यः
वभूव मान्यो नगरस्य विद्वान् पुरन्दरस्यापि तथैव सद्यः ॥ ४९ ॥
सत्काव्यमाधुर्यरसानुसेवी संगीतभज्ञो गुरु कीर्तिगायी
स्वदेशवस्त्रावृतदिव्यमूर्तिः मान्यो जनानामनवद्यचर्यः ॥ ५० ॥
कन्हैयालालदाधीचः शब्दशास्त्र विचक्षणः
नित्यं पीत्वापि योऽतृप्तः सुधां भागवतीं पपौ ॥ ५१ ॥
वैद्यः परशुरामश्च सर्वव्याधि विनाशकृत्
द्रष्ट परमतत्वानां साकृतौच निराकृतौ ॥ ५२ ॥
कर्मप्रयोक्ता चतुरः सभासु सद्धर्मगोप्ता मधुराभिभाषी
व्यासाग्रणीश्चूरुपुराधिवासी सुधीरधीरः शिवदत्तवर्यः ॥ ५३ ॥
प्रसन्नः परमगंभीरः सत्यवाक् स्थिरमानसः
सन्मान्यो व्रजलालोऽसौ प्राज्ञो गोस्वामिनांवरः ॥ ५४
हथवा राज्यपतिर्विज्ञो विख्यातो वुधपूजकः
नानाग्रंथप्रकाशीच काश्यां सर्वैः प्रशंसितः ॥ ५५ ॥

नित्यं दीनार्तिविध्वंसी नित्यंसंस्कृति रक्षकः
श्री गौरीशंकरो वैद्यः खुर्जा मण्डलमण्डनः ॥ ५६ ।

वार्ता सदा यस्य रहस्यपूर्णा हास्यावतारः सुहृदां समाजे
श्री वैजनाथोऽथच योगराजः सुधीः सदा धर्मविचारशीलः ॥ ५७ ॥

सम्बन्धिवर्याअपि तस्य सर्वे स्वस्वप्रदेश-प्रतिभूप्रतिष्ठाः
सदा सदाचारपरा वरिष्ठाः बोधेन मानेन च ये गरिष्ठाः ॥ ५८ ॥

युक्तप्रान्ते विदितविभवः सर्वशास्त्राब्धिपोतः
राज्ञां नेता प्रवचनपटुः श्रीगणेशस्य लालः ।
बाबूलालः प्रथितमहिमा शिष्यसंघैर्विशालैः
पुत्रैः पौत्रैरधिगतगुणैः ख्यातकीर्तिः सुवैद्य; ॥ ५६ ॥

बल्लीरामः प्रतिजनहिते नित्यमासक्तचेता-
गांगेये यः प्रथितसुमतिर्यामुने चापि कूले ।
व्याख्यादक्षः परमरसिको रामलीला विलासी
मान्यो नेता द्विजजन सभाशासको विज्ञवर्यः ॥ ६० ॥

एते तथाऽन्ये शतशः प्रसिद्धाः सहस्रशश्चात्मगृहेऽपि सिद्धाः
गुरुप्रतिष्ठां परिपोषयन्तः परम्परां तस्य विवर्धयन्ति ॥ ६१ ॥

ख्यातिर्नवा ख्यातिरिहास्तु काचित् लक्ष्यं हि तेषां निजधर्मरक्षा
प्रजुष्यते संस्कृत पण्डितै स्तत् स्वसंस्कृति नित्यमतीत्य हेतुम् ॥ ६२ ॥

सा संस्कृतिः किन्तु भुवो व्रजन्ती संदृश्यते सम्प्रति भारतीया
प्रत्यर्थिनी कापि नवीन धारा समुच्छ्वलन्तीव विलोक्यते च ॥ ६३ ॥

सात्विकं जीवनं लुप्तं लुप्ता धर्मस्य सा गतिः
कृत्रिमेऽस्मिन् युगे कृत्स्ना प्रकृतिः कृत्रिमायते ॥ ६४ ॥

क्षणिकं ज्ञानविज्ञानं क्षणिकं स्नेहदर्शनम्
सर्वेषु क्षणिकं सर्वं शाश्वतं क्षणिकायते ॥ ६५ ॥

नव्यं किमेतत् किमुयच्च जीर्णम् किम्वा नवं यत्तु पुनर्विशीर्णम्
गति विचित्रा जगतो गतीनाम् ज्ञेया न केनापि जनेन जीर्णा ॥ ६६ ॥

स्नेहं न गेमीहं नहि वापि मोहम् कस्यापि संरक्षति लोकवृत्तिः
सदैव सा याति निगूढतत्वा निगूढतत्वैव विकासमेति ॥ ६७ ॥

गतागतैस्तैः समयप्रवाहैःक्षुभ्यन्ति नैते सुधियस्तु किन्तु
लक्ष्यं ध्रुवं स्वं नियतात्मवृत्त्या समेत्य पारञ्च परं प्रयान्ति ॥ ६८ ॥

तेषां हि सृष्टिरिह सानुपमैव सृष्टिः
काचित् परैव रजसोऽथ च संस्कृतिः सा
नित्यं स्थिता अपि भवे न भवे स्थितास्ते
रुन्धन्ति यान्न विषयाः क्वचिदेकदेशे ॥ ६९ ॥

यः कोऽपि तत् हृदयहारी सरो रिरंसुः
आयातु सोऽत्र सुरवागभिरामतीरम् ।
सिञ्चन्ति यत्र मुनयः करुणाकणैः स्वैः
स्नेह द्रवार्द्र सलिलैः सकलानभीक्ष्णम् ॥ ७० ॥

लोके सदा भवतु संस्कुत जीवनं नः
श्रद्धामयं श्रुतिपरञ्च तपोऽभिपूतम् ।
निष्कामकर्मरतिभिः सकलार्थसिद्धिः
विश्वात्मतुष्टिरथ यत्र पदे पदे स्यात् ॥ ७१ ॥

तादृक् क्षणश्च व्रजतात् न जनस्य कश्चित्
न प्रोच्छ्वलन्तु सततं हृदयात्तु यस्मिन्
प्रेमप्रवाहभरितात् करुणैकसाराः
विश्वात्मभाव परिकीर्ण परोपकाराः ॥ ७२ ॥

श्री कालिदास भवभूतिरसाभिषिक्ता सद्वर्णिता कविवरै र्भवमङ्गलाय ।
श्रीमालवीयतिलकादि महानुभावैः संसेविता नवयुगेऽपि विकासिता च ॥
भागीरथी द्रुपदसम्भवमातृजेन देवीप्रसाद तनयेन समर्चितेयम्
विद्याधरेण बुधवृन्दकृपाधरेण ससंस्कृतिर्जगति दिव्यतु भारतीया ॥

## शुद्धाशुद्धिपत्रम्

| अशुद्ध | शुद्ध | पृष्ठ | श्लोकसंख्या |
|---|---|---|---|
| महौजास सा | महौजसा सा | ३ | २१ |
| लब्धकर्णैः | लब्धकर्णैः | ४ | २८ |
| प्रसन्नऽतिथि | प्रसन्नोऽतिथि | ७ | १० |
| पुभान् | पुत्रान् | ७ | १३ |
| ऋशोधनाय | ऋणशोधनाय | ७ | १४ |
| वहुविभय | बहुविघभय | १० | ४१ |
| श्राचाय | आचार्य | १५ | १० |
| भ्रायसि | भ्रम्यांस | १६ | १७ |
| निबगद | निजगाद | १६ | ०५ |
| दष्ठ्वा | दृष्ट्वा | २४ | ५० |
| भ्रशम् | भृशम् | २५ | ४ |
| स्मतेः | स्मृते | २५ | ५ |
| घन्यो | घन्यौ | ५२ | १६ |
| जहर्न | जहुर्न | ५३ | ३१ |
| संस्कारर्जिते | संस्कारवर्जिते | ५६ | ६ |
| विद्वगोदष्ठी | विद्वद्गोष्ठी | ५६ | २१ |
| शस्त्राब्धौ | शास्त्राब्धौ | ५८ | ३४ |
| नित्यंव | नित्यंब्रह्म | ७७ | ७६ |
| हारी | हारि | ८८ | ७० |

## काव्ये वर्णितानां विदुषां स्थलादिकानाञ्च नामसूची-

-:०:-

## विद्याधरशास्त्री की अन्य कृतियें—

| | | |
|---|---|---|
| विद्याधरनीतिशतकम् | | ( नीति ) |
| पूर्णानन्दम् | | ( नाटक ) |
| कलिपलायनम् | | ( नाटक ) |
| विक्रमाभ्युदयम् | | ( चम्पू ) |
| गोपालहरी | | ( स्तोत्र ) |
| मन्त्रलहरी | | ( खण्डकाव्य ) |
| [illegible]न्दोहिनी | ( प्रभृति ) | ( खण्डकाव्य ) |

## हरनाम विद्यालय के प्रकाशन—

| | |
|---|---|
| शतचण्डी यज्ञविधानम् | ( देवीप्रसाद ६।।) |
| गंगासिंह कल्पद्रुम-प्रथमभाग | ( देवीप्रसाद २) |
| यथार्थदर्शन— | ( विद्याधरः ।।) |
| संस्कृत बालबोधिनी | ( प्रेसमें ) १) |